॥ श्रीः ॥

श्रीमदप्पयदीक्षितविरचिता

# चित्रमीमांसा

अभिवन्द्यचन्द्रशेखरमाद्यं गौरीसखं परं ज्योतिः ।
वितनोमि विपुलविषयां विशदार्थामर्थचित्रमीमांसाम् ॥

त्रिविधं तावत्काव्यम् । ध्वनि-गुणीभूतव्यंगय-चित्रभेदात् ।

यत्र वाच्यातिशायि व्यंगयं स ध्वनिः ।

यथा---

'स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण[1] नाभिं प्रथमोदबिन्दवः[2] ॥'

अत्र तपस्यन्त्या[3] देव्या देहोपरि निपततां प्रथमवृष्टिबिन्दूनां क्रियास्वभाववर्णनेन देव्याः[4] समाध्युचितावस्थानाभिव्यक्तिद्वारा चिरनिदाघतप्त[5]देहोपरि निपतनेन सुखपारवश्यसंभ्रमहेतौ प्रथमवृष्टावप्यविहता समाध्यवस्था व्यज्यते । तथा हि --

'नासाग्रन्यस्तनयनः संवृतास्यः[6] सुनिश्चलः ।
ध्यायीत मनसा देवमुरो विष्टभ्य चाग्रतः ॥'

इति समाधिमतामवस्थानमाहुः[7] । तत्र पक्ष्मसु स्थिता इत्यनेन नासाग्रन्यस्तनयनतारूपमर्धनिमीलनं[8] व्यज्यते । सर्वथोन्मीलने पक्ष्मणामूर्ध्वाग्रत्वेन सर्वथा[9] निमीलने[10] तेषामधोग्रत्वेन च तेषु जलबिन्दूनां स्थित्यसंभवात् । पक्ष्मभ्यश्च्युतानां तेषामास्याप्रवेशेना[11]धरोष्ठे निपत्य ततश्च्युतिकथनेन संवृतास्यत्वं व्यज्यते । ततश्च्युतानां तेषां[12] स्तनोत्सेधनिपतनादिवर्णनेन उरोविष्टम्भः । अलसवदवनतावस्थाने[13]

---

१- चिणा-ख २- बिन्दवः-ख ३- तपस्यता (?)- क ४- देव्या-क,घ, ५- चितुनिदाघ (?)--क -६- सवतस्या: (?)-ख ७- समवताम्-ख ८- निमीलनं (?) -क
९- सर्वता-ख १०- निमिलने-क -निमीलनेन-ख ११- आस्येऽप्रवे--ख -आस्यप्रवेशेन-ग १२- तेषां- इति ख पुस्तके नास्ति १३- अलसवदनतावस्थाने-ख,ग

हि स्तनयोरन्त: संकुचिताकारतया तदुत्सेधयोस्तेषां पतनं न स्यात् । कथंचित्तयो: पतित्वा वलित्रयं प्राप्तानामपि वलीषु तिर्यगेव गमनं स्यात्, न नाभिदेशप्राप्ति: । नाभौ च संवृतायां प्रवेशोन स्यात् । पक्ष्माधरादिपतन-क्रमकथनेन च निश्चलत्वं व्यज्यते । मुखादि चलने सति पक्ष्मपतितानां तेषामधरपयो-धरादिक्रमेण पतनासंभवात् । किं चैभिरेव विशेषणैर्देव्या लोकोत्तर[1] सौन्दर्यमभिव्यज्यते । स्थिता इत्यनेन पक्ष्मणामविरलताया: क्षणमित्यनेन तेषां मसृणताया: पक्ष्मपतनशिथिलवेगैरुदबिन्दुभिस्ताडनोक्त्याधरस्याति-सौकुमार्यस्य पक्ष्माधरपतनादिभि:[2] शिथिलवेगानां[3] तेषां स्तनोत्सेधे[4] चूर्णीभाववर्णनेन तयोरतिकाठिन्यस्य, उरोविष्टम्भेऽपि वलीषु तेषां स्खलनोक्त्या वलीनां विस्पष्टताया: सर्वबिन्दूनां नाभावेव प्रवेशकथनेन नाभेरतिगम्भीरतायाश्चाभिव्यंजनात् । एवं च[5] वाच्यातिशायि व्यं-ग्यमत्रेति ध्वनेरुदाहरणमिदम्[6] । यथा वा[7]---

"नि:शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे[8] दूरमनञ्जने पुलकिता तन्वी तवेयं तनु: ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमा
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ।।"

अत्र वापीं स्नातुं गतासि न तु तत्सकाशमिति वाक्यार्थे स्थिते तत्स-काशमेव रन्तुं गतासीत्यधमपदेन प्राधान्येन व्यज्यते । तथाहि :-अधमत्व-मपकृष्टत्वं तच्च जात्या कर्मणा वा भवति । तत्र जात्यापकर्षं नोत्तमना-यिका नायकस्य वदति । नापि सापराधपर्यवसायिदूतीसंभोगादिहीनक-र्मातिरिक्तेन कर्मणा । तादृशं च दूतीसंभोगात्[9]प्राचीनं सर्वं सोढमेवेति नी-द्घाटनार्हम् । अन्यथा स्वयं[10] दूतीसंप्रेषणानुपपत्ते: । तदनन्तरं च सप्रेषित-दूतीसंभोगरूपमेव स्वयं संनिहितचिह्नैर्ज्ञातुं शक्यं हीनकर्म संभवतीति तत्पर्यवसायिनाधमपदेन तस्यान्तिकमेव रन्तुं गतासीति व्यज्यते । नि:शेष-च्युतचन्दनं स्तनतटमित्यादीनि वाक्यानि[11] संभोगचिह्नोद्घाटनेन तत्र साहा-[12]यकमाचरन्ति । कथम् ? नि:शेषच्युतचन्दनं स्तनतटमित्यत्र तावद्वापीं स्ना-तुमितो गतासीति वाच्यार्थमुपपादयितुमिवो[13]त्तरीयकर्षणेन[14] चन्दनच्यु-तिरित्यन्यथासिद्धिपरिहाराय नि:शेषविशेषणं[15] कृतम् । ततश्चन्दनच्युते:

---

१- अतिसौन्दर्यम्- ख- सौन्दर्यमपि-क,ग-२- पक्ष्माधरपतनात्-क,ग-३-अतिशि-थिलवेगानां-क,ग-४- स्तनोत्सेधचूर्णी--क,ग-५ च-गपुस्तकेनास्ति, ६-ध्वानरुदाहरणमिदं-ख-७ वा-ख-पुस्तकेनास्ति ८- नेत्र-ख-९-दूती- संप्रेषणात् ख- १० स्वयं-ख पुस्तकेनास्ति ११- वाच्यानिन्य १२- साहाय्यमाच--ग-१३-उपपादयितुमिव -क,ख-ग १४- उत्तरीयधर्षणेण-क,ग-उत्तरीकर्षणेण घ-१५-नि:शेषणं-ख

स्नानसाधारण्यव्यावर्तनेन संभोगचिन्होद्घाटनाय तद्ग्रहणम् । स्नाने हि स-[1]
र्वत्र चन्दनच्युति: स्यात्, तव तु स्तनयोस्तटे उपरिभाग एव दृश्यते, इय-
माश्लेषकृतैवेति[2] । तथा निर्मृष्टरागोऽधर इत्यत्र ताम्बूलग्रहणविलम्बात्प्रा-
चीनरागस्य किंचिन्मृष्टतेत्यन्यथासिद्धिपरिहाराय निर्मृष्टराग[3] इति[4] रागस्य
नि:शेषमृष्टतोक्ता । पुन: स्नानसाधारण्यव्यावर्तनेन संभोगचिन्होद्घाटनाया-
धर इति विशिष्य ग्रहणम् । उत्तरोष्ठे सरागेऽधरोष्ठमात्रस्य निर्मृष्टरागता
चुम्बनकृतेवेति । नेत्रे दूरमनञ्जने इत्यत्र प्रातर्दत्तमंजनं कालविलम्बेन[5] किं-
चिद्विलुप्तमित्यन्यथासिद्धिपरिहाराय दूरमित्युक्तम् । दूरमत्यर्थमित्यापात-[6]
तोऽर्थ: । कालत: स्नानेन वा सर्वतोऽञ्जनलोप: स्यात्, तव तु लोचनयो:
क्वचित्प्रान्त एवानञ्जनत्वमिदं[7] चुम्बनकृतमेवेति । पुलकिता तन्वी तवेयं
तनुरित्यत्रापाततस्तन्वीति सहजतानवकीर्तनेन पुलकितेति स्नानचिह्नोप-
न्यास: पुलकितापि तन्वी वर्तते इति हृदि स्थितोऽन्वय: तेन च स्नानेन
पुलकिता तनु: किंचिदुच्छ्वसिता भवति, इयं तु न तथेति रति[8]क्लेशजनिता-
वेव तानवपुलकोद्गमाविति मर्मोद्घाटनम् । एवमेभिर्वाक्यैरुपस्कृतेनाधमपदेन
तस्यान्तिकमेव रन्तुं गतासीति व्यज्यमाने प्राग्वाच्यार्थदशायां[9] बापीं
स्नातुं गतासीत्येतदनुगुणार्थतयान्वितं[10] मिथ्यावादिनीति[11] संबोधनमपि[12] व्यं-
ग्यानुगुणं स्वार्थे पर्यवस्यति । ततश्च न्यग्भावितवाच्यमस्यापि व्यंग्यं
वाच्यातिशायीति[13] इदमपि ध्वनेरुदाहरणम् ।

यत्र व्यंग्यं वाच्यानतिशायि तद्गुणीभूतव्यंग्यम् ।

यथा-

गच्छाम्यच्युत दर्शनेन भवत: किं तृप्तिरुत्पद्यते
किंत्वेवं विजनस्थयोर्हतजन: संभावयत्यन्यथा ।
इत्यामन्त्रणभंगिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन्पुलकोत्कराञ्चिततनुं गोपीं हरि: पातु व: ।।

अत्र गच्छाम्युच्युतेत्याद्यामन्त्रणेन त्वया रन्तुमेतावत्कालं स्थितं तन्न[14]

१- समग्रचन्दन- ख -२- आश्लेषणतैवेति- क,ध -३- निमृष्ट-ख-४- इति
रागस्य-ख- पुस्तकेनास्ति ५- काले-ख- विलम्बेन इतिचनास्ति ६-
दूरमित्यर्थम्-क- ७- अनञ्जनत्वमिति-क,ग-८- रति- ख-पुस्तकेनास्ति
९- वाच्यार्थतादशया-ग, घ-१०- गतासीतिये (?) क- ११-- वादिनीत्यादि-
क,ख,ग १२- अपि-क-ख-ग पुस्तकेषु नास्ति १३- बाच्य- ख पुस्तकेनास्ति,
वाच्यादति-- ग- १४- न तल्लब्धम्-क,खग.

लब्धमिति व्यंग्यम् । तत्तु इत्यामन्त्रणभंगिसूचितवृथावस्थानखेदालसामि-
त्यैतद्वाच्यस्य सिद्धिं करोतीति तदंगत्वान्न वाच्यातिशायि । अतो गुणी-
भूतव्यंग्यमिदम् । यथा वा--

प्रहरविरतौ[1] मध्ये वाह्नस्ततो[2]ऽपि परेऽथवा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि[3] ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः[4] सबाष्प[5]गलज्जलैः[6] ॥

अत्र सकलमहः परमावधिः । ततः परं प्राणान्धारयितुं न शक्नोमीति
व्यंग्यं प्रियगमननिवारणरूपस्य वाच्यस्य सिद्धिं करोतीति तदंगत्वाद्वा-
च्यानतिशायि । अतःइदमपि गुणीभूतव्यंग्यम् ।

यदव्यंग्यमपि चारु तच्चित्रम् ।

तत्त्रिविधम्-- शब्दचित्रमर्थचित्रमुभयचित्रमिति । शब्दचित्रं यथा--

नवपलाशपलाशवनं पुरः स्फुटपराग[7]परागतपंकजम् ।
मृदुलतान्तलतान्तमलोकयत्[8]स सुरभिं सुरभिं सुमनोभरैः ॥

अर्थचित्रं यथा--

स च्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः ।
अंगारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे[9] ॥

उभयचित्रं यथा--

वराहः कल्याणं वितरतु स वः कल्पविरमे
विनिर्धुन्वन्[10]नोदन्वतमुदकमुर्वीमुदवहत् ।
खुराघातत्रुट्यत्कुलशिखरिकूटप्रविलुठ-
च्छिलाकोटि[11]स्फोटस्फुट[12]घटितमंगल्य[13]पटहः ॥

तदेवं त्रिविधे काव्ये[14] ध्वनिगुणीभूतव्यंग्ययोरन्यत्रास्माभिः प्रपंचःकृतः । श-
ब्दचित्रस्य प्रायोनीरसत्वान्नात्यन्तं तदाद्रियन्ते कवयः न वा तत्र विचारणी-
यमतीवोपलभ्यत इति शब्दचित्रांशमपहायार्थचित्रमीमांसा[15] प्रसन्नविस्तीर्णा
प्रस्तूयते ।

---

१- प्रहरविहृतौ- ख-२- मध्येऽप्यह्नस्तु ख-३- मिहेष्यसि-ग-
४- बालावाक्यैः ख- ५- स- ख- पुस्तकेनास्ति ६- बाष्पकलमलैः(?) ख-
७- फुटपराग-ग- ८- अलोकयन्-क-६- वभाषे - ग घ १०-विनिर्धु-क,ग०
११- कोटी ख- १२- स्फुट - ख १३- मांगल्य-क,ग १४- काव्ये घ-
पुस्तकेनास्ति १५- अर्थचित्रेमीमांसा- क,ग

चिन्त्येऽत्र चित्रवर्गे[1] प्रदर्श्ययोर्लक्ष्यलक्षणयो: ।
प्राचीनानामेव श्लोका: प्रायेण लिख्यन्ते ।।
इति चित्रमीमांसायां ग्रन्थारम्भप्रकरणम् ।

---

उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरंगे नृत्यन्ती तद्विदां चेत: ।।

चन्द्र इव मुखमिति सादृश्यवर्णनं तावदुपमा । सैवोक्तिभंगीभेदेना-नेकालंकारभावं भजते । तथा हि,(1) 'चन्द्र इव मुखं मुखमिव चन्द्र:' इत्युपमेयोपमा । 'मुखं मुखमिव' इत्यनन्वय:[2] । 'मुखमिव चन्द्र' इति प्रतीपम् । 'चन्द्रं दृष्ट्वा मुखं स्मरामि' इति स्मरणम् । 'मुखमेव चन्द्र:' इति रूपकम् । 'मुखचन्द्रेण ताप: शाम्यति' इति परिणाम: । 'किमिदं मुख-[3]मुताहो चन्द्र:' इति ससंदेह:[4] । 'चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति' इति भ्रान्तिमान् । 'चन्द्र इति चकोरा: कमलमिति चंचरीकास्त्वन्मुखे रज्यन्ति[5]' इत्युल्लेख: । 'चन्द्रोऽयं न मुखम्' इत्यपन्हव: । 'नूनं चन्द्र:' इत्युत्प्रेक्षा । 'चन्द्रोऽयम्' इत्यतिशयोक्ति: । 'मुखेन चन्द्रकमले निर्जिते' इति तुल्ययोगिता । 'निशि चन्द्रस्त्वन्मुखं च हृष्यति' इति दीपकम् । 'त्वन्मुख स्वाहं रज्यामि चन्द्र एव[6] चकोरो सज्जते[7]' इति प्रतिवस्तूपमा । 'दिवि चन्द्रो भुवि त्वन्मुखम्' इति दृष्टान्त: । 'मुखं चन्द्रश्रियं[8] विभर्ति' इति निदर्शना । 'निष्कलंकं[9] मुखं चन्द्रादतिरिच्यते' इति व्यतिरेक: । 'त्वन्मुखेन समं चन्द्रो निशासु हृष्यति' इति सहोक्ति: । 'मुखं नेत्राकंरुचिरं स्मितज्योत्स्नोपशोभितम्' इति समासोक्ति: । 'अनेन सदृशं वक्त्रं हरिणाङ्कितसक्तिना' इति श्लेष: । 'मुखस्य पुरतश्चन्द्रो निष्प्रभ:[10]' इत्यप्रस्तुतप्रशंसा । एवमुक्तानेकालंकारविवर्तवतीयमुपमा ।

तदिदं चित्रं विश्वं ब्रह्मज्ञानादिवोपमाज्ञानात् ।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा ।।

---

१- चित्रगर्वे-क- २- अन्वय: घ-३- किमुख-ख-४- संदेह: क-घ- ५- अनुरज्यन्ति -क, ग- ६- हि -इत्यधिकं-क,ख,ग-७- रज्यते-ग,घ- सज्जते-ख-८- चन्द्रश्रिय: -घ- ९- नि:कलंकं-क- १०- नि:प्रभ-क

अस्यास्तावदेवं लक्षणमाहु:-

उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयो: ।

हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभि: ।।

कविसमयप्रसिद्ध्यनुरोधेनोपमानोपमेयत्वयोग्ययोरेव साधर्म्यमुपमा । नत्वतथाभूतयो:। अत एव 'कुमुदमिव मुखं प्रसन्नम्' इत्यादि[1] नोपमा । तथाभूतयोरपि वस्तुत्वद्रव्यत्वादिकृतमहृद्यं[2] साधर्म्यं न तथा । किंतु हृद्यमेव कान्तिमत्त्वादिकम् । सर्वोऽपि ह्यलंकार: कविसमयप्रसिद्ध्यनुरोधेन हृद्यतया काव्यशोभाकर एवालंकारतां भजते । अत: 'गोसदृशो गवय:' इति नोपमा । 'गौर्वाहीक' इति न रूपकम् । 'स्थाणुर्वा पुरुषो वा' इति न ससंदेह:[3] । 'इदं रजतम्' इति न भ्रान्तिमान् । 'नायं सर्प:' इति नापह्नुति: । 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति न पर्यायोक्तम् । 'पर्वतो वह्निमान्' इति नानुमानम् । 'स देवदत्त:' इति न स्मरणम् । 'तस्थस्थमिषा तार्ततास:' इति न यथासंख्यम् । 'पुत्रेण सहागत: पिता[4]' इति न सहोक्ति: । 'तेन विना गत:' इति न विनोक्ति: 'श्वेतो धावति' इति न श्लेष: इत्याद्यूहनीयम् । अत्रेदं विचार्यते- द्वयोरिति विशेषणमिह किमर्थम् । स्वस्य स्वेनैव सार्धर्म्यवर्णनात्मकस्यानन्वयस्य व्युदासार्थमिति चेत्, एवमप्युपमानस्योपमेयत्वकल्पनात्मके प्रतीपे द्वयो: पर्यायेणोपमेयत्वकल्पनात्मिकायामुपमेयोपमायां[5] चातिव्याप्ति: । तयो: सादृश्यवर्णनसत्त्वादुपमात्वेन संग्राह्यत्वे[6] तथैवानन्वयोऽपि संग्राह्य: स्यादिति व्यर्थं द्वयोरिति पदम् । एतेन 'साधर्म्यमुपमा भेदे' - इति काव्यप्रकाशिकोक्त [redacted] लक्षणेऽनन्वयव्युदासाय कृतं भेदग्रहणमपि[7] प्रत्युक्तम् । नहि संभवत्साधर्म्यवर्णनं स्वोपमात्वम् । येन स्वस्य स्वेन साधर्म्यासंभवादनन्वयस्य[8] व्यवच्छेद्यत्वमितरयो: संग्राह्यत्वं च[9] स्यात् । तथात्वे 'हंसीव धवला कीर्ति: स्वर्गङ्गामवगाहते' इत्यादौ[10] कविकल्पितसाधर्म्योपमाया अनुपमात्वप्रसंगात् । किं च सत्यामप्युपमानोपमेयत्वयोग्यतायां सत्यपि हृद्यत्वे लिंगवचनभेदादिदुष्टायामुपमायां 'हंसीव

---

१- इत्यादिनोपमा-क,ख,ग-इत्यादिनोपमा-घ २- अहृद्यसाधर्म्यं-क,ग- ३- संदेह: क,ख,घ ४- पिता-खपुस्तके नास्ति ५- पर्यायेणोपमेयत्वकल्पनात्मिकाया-घ, पर्यायेणोपमानोपमेयत्व--क,ख,ग- ६- संग्राह्यत्वेन-ग- ७- भेदग्रहणमिति-क- ८- साधर्म्यासंभवात् ग-९- न-घ-१०- इत्यादे: क,ख,ग

धवलश्चन्द्र: सरसीवामलं[१] नभ:" इत्यादिरूपायामतिव्याप्ति: । उदाहरिष्यमाणे[२] चोपमाध्वनावतिव्याप्ति: । न हि सोऽप्यलंकार: । अलंकार्यत्वात् ब्राह्मणश्रमणन्यायेन तत्रालंकारध्वनिव्यपदेश इति सिद्धान्तात् । यदि च दृष्टादृष्टालंकार्यालंकारसाधारणोपमासामान्यलक्षणमिति नोक्तातिव्याप्तिस्तदोपमानोपमेयत्वयोग्ययोरिति दृष्टमिति च व्यर्थम् । कविसमयप्रसिद्धभावादि[३]दृष्टोपमाया अपि संग्राह्यत्वात्[य] । यत्तु विद्यानाथेन लक्षणमुक्तम्-

"स्वत: सिद्धेन भिन्नेन संमतेन च धर्मत: ।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा ।।" इति ।

अत्र स्वत:सिद्धेनेत्युत्प्रेक्षा[४] व्यावृत्ति: । तत्रोपमानस्य कविकल्पितत्वेन लोकसिद्धत्वाभावात् । भिन्नेनेत्यनन्वयव्यावृत्ति: । संमतेनेति सर्वविधदृष्टोपमाव्यावृत्ति: । कविसमयप्रसिद्ध्यभावेन लिंगवचनभेदादिना वा यद्यदसंमतं तस्य सर्वस्यापि संमतपदेन व्यावर्तनात् । धर्मत इति श्लेषव्यावृत्ति: । श्लेषे हि "सकलकलं पुरमेतज्जातं संप्रति सुधांशु[५]बिम्बमिव" इत्यादौ शब्दसाम्यमात्रमिवशब्देनोच्यते न गुणक्रियारूपधर्मसाम्यम्[६] । अन्येन वर्ण्यस्येत्यनेन प्रतीपव्यावृत्ति: । तत्र वर्ण्येन प्रकृतेन सह[७]ाप्रकृतस्य[८] सादृश्यवर्णनात् । एकदेत्यनेनोपमेयोपमा[९]व्यावृत्ति: । वाच्यमित्यनेन व्यंग्योपमा[१०]व्यावृत्ति: इति । तत्रोत्प्रेक्षाव्यावृत्त्यै स्वत:सिद्धेनेत्युक्तमयुक्तम्[११] । उत्प्रेक्षायामिवकारस्य विषयविषयिणोस्तादात्म्यादिसंभावनावाचकत्वेन तत्र साम्यस्यावाच्यतया[१२] तत एव तद्व्यावृत्ते: । उक्तं हि चक्रवर्तिना--

"यदायमुपमानांशो लोकत: सिद्धिमृच्छति ।
तदोपमैव येनेवशब्द: साधर्म्यसूचक: ।।
यदा पुनरयं लोकादसिद्ध: कविकल्पित: ।
तदोत्प्रेक्षैव येनेवशब्द:[१३] संभावनापर: ।।" इति ।

दृष्टं च लोके संभावनापरत्वमिवशब्दस्य । "दूरे तिष्ठन्देवदत्त इव भाति[१४]" इति । कथं च स्वत:सिद्धेनेत्यनेनो[१५]त्प्रेक्षाव्यावृत्ति: ।

---

१- सरसीवामलं-ग-२- च-ख- पुस्तके नास्ति ३- आदि-ग पुस्तकेनास्ति ४- इत्यनेन-इत्यधिकं गपुस्तके ५- सितांशु क-६- साधर्म्यम् क-७ सह-क पुस्तके नास्ति ८- अन्यस्य क- ९- उपमेयोपमाया- क, ग, १०- व्यंग्योपमाया क-११- अयुक्तम्-ख-पुस्तकेनास्ति, १२- वाच्यतया ख-१३- येनेकशब्द: ख- १४- आभाति क- १५- अनेन -क-ग-पुस्तकयोर्नास्ति ।

'न नित्यमस्मिन्परिपूर्णतेति त्यक्त्वा नभ:शाणितलावतीर्ण: ।

आनन्दयन्निन्दुरिवखधाम्ना विभाति लोके नवकाकतीन्द्र:[१] ।।'

इति तदीयोत्प्रेक्षोदाहरणस्योपमानस्य स्वत:सिद्धत्वात्[२] । इन्दु: शाणि तलावतीर्णत्वाकारेण कविकल्पित इति चेत्तर्हि ,

'चन्द्रबिम्बादिव विषं चन्दनादिव चानल: ।

परुषा वागितो वक्त्रादित्यसंभावितोपमा ।।'

इत्युक्तायामसंभावितोपमायामव्याप्ति:[३] । विषानलयो: स्वत:सिद्धत्वेऽपि चन्द्रचन्दनप्रभवत्वेन कविकल्पितत्वात् ।

'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगंगापयस: पतेताम् ।

तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्ष: ।।'

इति कविकल्पितोपमानायामुपमायां सर्वथैवाव्याप्ति: । भिन्नेनेत्यनन्वय-व्यावृत्त्यर्थमुपात्तमप्ययुक्तम्[४] ।

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।

एको हि दोषो गुणसंनिपाते निमज्जतीन्दो: किरणेष्विवाङ्क: ।।'

इत्यस्यामुपपादकोपमायामव्याप्ते: । तत्रोपमेयदोष[५]गुणसामान्यान्तर्गतानामुपमानानां दोषगुण[६]विशेषाणां कलंककिरणानां तद्भिन्नत्वाभावात् । अथोपमेयतावच्छेदकभिन्नोपमानतावच्छेदकावच्छिन्नत्वमुपमानस्य तद्भिन्नत्वमेतदपि[७] न युक्तम् ।

'अनवरतकनकवितरणधृत जललवकरतरंगितार्थिततेः[८] ।

भणितिरिव मतिर्मतिरिव चेष्टाचेष्टेव कीर्तिरतिविमला ।।'

इति रशनोपमायामव्याप्ते: । मतित्वादुपमानतावच्छेदकानामुपमेयताव-च्छेदकभिन्नत्वाभावात्[९] । उपमेयोपमायामुपमानतावच्छेदकयोर्द्वयोरपि तद्भिन्नत्वाभावेनोक्तविशेषणेनैव तदव्यावृत्तिसिद्धया एकदेत्यस्य वैयर्थ्यापत्तेश्च ।

'रजोभि: स्यन्दनोद्धूतैर्गजैश्च घनसंनिभै: ।

भुवस्तलमिव[१०] व्योम कुर्वन्व्योमेव भूतलम् ।।'

---

१- नवकाकातीन्द्र: क-२-इन्दो: इत्यधिकं क-ख-ग पुस्तकेषु -३- इत्युक्तरूपायाम्, -क,ख-ग-४- मप्ययुक्तं (?) क, --युक्तमप्ययुक्तम् -ग- ५- दोष -क पुस्तके नास्ति ६- दोषागुण् -ख-७- अथोपमेयतावच्छेदकभिन्नत्वं उपमानभिन्नत्वं-क, अथोपमेयतावच्छेदकभिन्नत्वं तद्भिन्नत्व-ख-८- -तार्थितते: ख- ९- -च्छेदकावच्छिन्नत्वाभावात्-क,-- मुपमेयतावच्छेदक त्वाभावात्-ख- १०- नमस्तल -ख

इत्युपमेयोपमाप्रकरणोदाहरिष्यमाणपरस्परोपमायामव्याप्तेश्च । अथ सोपमेयतावच्छेदकभिन्नधर्मावच्छिन्नत्वमुपमानस्य तद्भिन्नत्वमिति विवक्षितमिदमपि न सम्यक् ।

उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तुद्दुकूलादविदूरमौलिर्बभौ पतङ्गं इवोत्तमांगे ।।

द्वारं द्वारमटन्भिक्षुः शिक्षात्येवं न याचते ।
अदत्वा मादृशो मा भूर्दत्वा त्वं त्वादृशो भव ।।

इत्याद्यभिन्नधर्मिकोपमास्वव्याप्तेश्च । तत्र परमेश्वरत्वादेः सोपमेयतावच्छेदकस्यैवोपमानतावच्छेदकत्वात् । श्लेषव्यावृत्त्यर्थं धर्मत इति विशेषणमप्ययुक्तम् । तत्र न शब्दसाम्यमात्रमिवेनोच्यते किं तु गुणसाम्यमपीति तदव्याकृतेः । ननु पुरे सकलकलत्वं कलकलशब्दसाहित्यं सुधांशुबिम्बे कलासाकल्यमिति, नैकोऽनुगतो गुणो लभ्यते । मैवम् । श्लेषभित्तिकाभेदाध्यवसायमूलया भेदेऽभेद इत्येवंरूपयातिशयोक्त्या धर्मसाधारण्यलाभात् । नह्युपमानोपमेययोरनुगत्या धर्मस्य मुख्यसाधारण्य स्वोपमालंकारः ।।

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्तांगरागो नवचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ।।

इत्यादौ हरिचन्दनबालातपहारनिर्झरादीनां बिम्बप्रतिबिम्बभावेन निर्दिष्टानामपि साधारणधर्मत्वांगीकारात् । ननु सकलकलमित्यादावपि गुणसाम्यं चेदुपमैव स्यादिति चेत् शब्दसाम्यमात्रं चेदपि किमित्युपमा न स्यात् । नहि शब्दान्यगुणादिसाम्यमेवोपमाप्रयोजकं न शब्दसाम्यमिति कुलधर्मः ।

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरंजनात् ।।

---

१- प्रकरणोदाहरिष्य स- २- आतपत्रः स-३- तद्दुकूलाद्--ग
४- पततुगं-स ५- पूर्वार्द्ध- स पुस्तके नास्ति ६- न तद्व्यावृत्तिश्च -क,ग
तद्व्यावृत्तेः-ख ७- ननु-स - ८- ह्युपमानोपमेयानुगत्या -ख- ९- सनिर्झरोद्गारा-
स- १० ननु- सपुस्तके नास्ति ११-चेदमपि-स, चेत्तदपि-ग-१२- आदि-ग-पुस्तके न
नास्ति १३- प्रतापात्तनो-स

इत्यत्रानुगतार्थनामरूपशब्दसाम्येऽप्युपमादर्शनात् । किं तु श्लेषस्यालंकारान्तरविविक्तविषयाभावेन निरवकाशतया बलवत्त्वेनालंकारान्तरबाधक[१]त्वादुपमाप्रतिभानेऽपि तत्प्रतिभोत्पत्तिहेतुः श्लेष एव नोपमेति मंखका[२]दिभिरभ्युपेयते । ततश्च यथा शब्दसाम्यमाश्रित्यो[३]पमाप्रतिभाने तद्बाधकत्वं श्लेषस्य तथा श्लेषभित्तिकाभेदाध्यवसायलब्धाभेदगुणसाम्यमात्रमा[४]श्रित्योपमाप्रतिभानेऽपि तद्वक्तुं शक्यमिति तदनुरोधेन [५]न तत्र गुणसाम्यपरित्यागः । यत्तु रुद्रटेन- सकलकलमित्यादावुपमां समर्थयमानेन,

> स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किं तु ।
> आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः ।।

इति शब्दसाम्यमात्रमिहोक्तम्, तदन्ततः शब्दसाम्यमात्रमाश्रित्याप्युपमा समर्थयितुं शक्येति[६] भावेन, न त्वभेदाध्यवसायेनापि गुणसाम्यं न संभवतीति भावेन[७] श्लिष्टविशेषणेष्वप्य[८]भेदाध्यवसायेनैक्यस्यालंकारान्तरेषु सर्वैरपि समाश्रयणात् । तस्माद्धर्मत इत्यनेन न श्लेषो व्यावर्तयितुं[९] शक्यते । वस्तुतस्तु सकलकलमित्यादावुपमैवेति[१०] व्यर्थं धर्मत इति विशेषणम् । अलंकारान्तरविविक्तस्तु[११] श्लेषस्य विषयस्तत्प्रकरणे दर्शयिष्यते । किं च विविक्तविषयाभावेना[१२]लंकारान्तरबाधकत्व[१३]मिति वाचोयुक्तिरप्ययुक्ता । विषयसद्भावमात्रेण निरवकाशत्वहानेर्विविक्तविषयानपेक्षणात् । नह्ययमलंकारगोचरो लोकन्यायो यद्विविक्तविषयो वक्तव्य इति । अरन्ध्ररत्नानां सुवर्णविविक्तविषयाभावेऽपि सुवर्णाश्रितानामेव चारुताहेतुत्वेनालंकारान्तरत्वव्यवस्थितेः । अन्यथा निरवकाशैररन्ध्रप्रत्युप्तरत्नैः सावकाशस्य तदाश्रयसुवर्णस्यालंकारता बाध्येत । नाप्ययं वाक्यवित्संमतः शास्त्रीयन्यायः पदे जुहोतीत्यादीनामिवोचरार्थे जुहोतीत्यादीनामाहवनीयशास्त्रादिविविक्तविषयाभावेऽपि सविषयत्वमात्रेण प्रतिष्ठितत्वात् । नाप्यसाधारण्येनैतच्छास्त्रन्यायः । सहोक्त्यादीनामतिशयोक्त्या[१४]दिविविक्तविषयाभावेऽपि तदबाधे-

---

१-साधकत्वात्-ख-२- मंखुकादि--क, ख,ग-३- मात्रम् इत्यधिकं-ख,ग-
४- मात्रं क-खपुस्तकयोः नास्ति ५- नतदनुरोधेन-ख ६- शक्यतइति भावेन-क,ख,
ग ७- भावेना श्लिष्ट-ख-८- अपि-क-ख-गपुस्तकेषु नास्ति ९- व्यावर्त्तु ख १०-
एव-इत्यधिकं-क,ख,ग ११- विभक्तस्तु-ग-१२- विषयान्तराभावेना-क,ग,विषयान्तराभावात्-ख, १३- अलंकारबाधकत्व-ख १४- मतिशयोक्त्या विविक्त--ग

नालंकारान्तरत्वव्यवहारादविरोध इहाप्यविशिष्ट: । तस्मादत्रोपमाप्रतिभोत्पत्तिहेतु: श्लेषालंकार इत्ययुक्तम् । प्रत्युतोपमैवात्र श्लेषप्रतिभोत्पत्तिहेतु: । नहि पुरवर्णनप्रकरणे सकलकलमिति तद्विशेषणपदस्य सुधांशुबिम्बमिवेत्युपमाया अनिबन्धने कलासाकल्यलक्षणार्थान्तरप्रतिभा संभवति । प्रतीपव्यावृत्त्यर्थमन्येन वर्ण्यस्य साम्यमित्युक्तं तत्रान्येनेत्ययुक्तम्[1] । अन्येनेत्यस्य[2] भिन्नविशेषणेन पौनरुक्त्यात् । किं च वर्ण्यात्प्रकृतादन्येनाप्रकृतेनेति यद्यर्थस्तदा

"इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।
रजांसि समरोत्थानि तच्छोणितनदीष्विव[3] ।।"

इति ससुच्चितोपमायामव्याप्ति: । तत्र समरांगत्वेन रजसां शोणितेषु पतनस्यापि वर्ण्यत्वात् । यदि तु स्वयं वर्ण्येनावर्ण्येन वा कुतश्चिद्वर्ण्यादन्येनेत्यर्थ: । तदाप्युत्कृष्टगुणत्वादुपमानभावमप्यसहमानस्योपमानत्वकल्पनरूपे[4] प्रतीपेऽतिव्याप्ति: । यथा--

"अहमेव गुरु: सुदारुणानामिति हालाहल[5] तात मा स्म[6] दृप्य:[7] ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ।।"

अत्र हि वर्ण्यानां दुर्जनवचसां हालाहलेनातिप्रकृष्टदोषत्वादुपमानभावमप्यसहमानेन साम्यनिबन्धनं प्रतीपम् । अत्र वर्ण्यस्येत्यप्ययुक्तम्[8] । त्वत्कीर्ते: पुरतो भाति ज्योत्स्ना ध्वान्तमलीमसा इत्यप्रस्तुतप्रशंसासंकीर्णोपमायामव्याप्ते: । तत्र कीर्तेरेव वर्ण्यत्वेन ज्योत्स्नाया अवर्ण्यत्वात् । अपि च "अन्येन वर्ण्यस्य साम्यं वाच्यम्" इति[9] कोऽर्थ: । किमन्यप्रतियोगिकत्वेन[10] वर्ण्यगतं साम्यं वाच्यमिति, किं वा यथाकथंचिद्वर्ण्यावर्ण्योभयनिरूपितं साम्यं वाच्यम्[11] । अथवा वर्ण्यानुयोगिकत्वेन[12] साम्यं वाच्यमिति । आद्ये "सरसिजमिदमाननं च तस्या: सममिति चेतसि संमदं विधत्ते" इत्युभयविश्रान्तसादृश्योपमायामव्याप्ति: । द्वितीये प्रसिद्धप्रतीपेऽप्यतिव्याप्तिस्तदवस्था[13] । एव[14] तृतीये वर्ण्यस्य साम्यमित्येतावता विवक्षितार्थलाभादन्येनेत्यस्य

---

१- तत्रान्येनेत्युक्तमयुक्तम्-क,ख,ग २- अनेनेत्यस्य-घ-३- नदीषु च-क,ख
४- पत्युत्कृष्ट--क,ख,ग ५- हालहल घ- ६- मास्मतात-ख-७- दृप्य: ख ८- वर्णस्येत्युक्तमप्य--ग ९- इत्यस्य -ग- १०- किमन्यप्रतियोगित्वेन-क-१२- इति इत्यधिकं क-ख-ग पुस्तकेषु, १२- वर्ण्यानुपयोगिक त्वेन -घ-
१३- एव इत्यधिकं क-ख-ग पुस्तकेषु १४- एवं-ख पुस्तके नास्ति

वैयर्थ्यम् । उपमेयोपमाव्याकृत्यर्थमेकदेति विशेषणमप्ययुक्तम् । तेन 'ख-मिव जलं जलमिव खं' इत्यादौ पर्यायेण प्रवृत्तायामुपमेयोपमायामतिव्या-प्तिनिरासेऽपि

'तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ।।

इति युगपत्प्रवृत्तायां तस्यामतिव्याप्त्यनिरासात् । अपि चैवम्,

'ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका[1] नितम्बिनी ।।

इति भिन्नसाधारणधर्मायां मालोपमायामव्याप्तिः । तत्रानेकदा साम्य-प्रतिपादनात् । न च बहूपमामेलनमेव मालोपमा नैका, तासु च प्रत्येकं लक्षणमस्त्येवेति वाच्यम् । तथा सत्युपमेयोपमाप्युपमाप्रतीपमेलनमेवेति तथाकृत्यर्थं विशेषणान्तरकरणायोगात् । संसृष्टिसंकरात्पृथग्[2]ग्रन्थिकृतां लेखनमुभयत्रापि तुल्यम् । स्वमुपमेयोपमाप्रकरणे[3] उदाहरिष्यमाणायां 'रजोभिः स्यन्दनोद्धूतैः' इति परस्परोपमायामव्याप्तिः । व्यंग्योपमाव्यावृ-त्त्यर्थं वाच्यमित्युक्तमप्ययुक्तम् ।

'न पद्मं मुखमेवेदं न भृंगौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्वाख्यानोपमैव सा[4] ।।'

इत्युक्तरूपायां तत्वाख्यानोपमायां साम्यस्यावाच्यत्वेनाव्याप्त्यापत्तेः ।

'त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृंगमिवालक्ष्यकेसरं भाति पंकजम् ।।'

इत्यादौ विशिष्टोपमा[5]या क्षिप्तविशेषणायुपमायामव्याप्त्यापत्तेश्च । 'शस्त्री श्यामा' इत्यादिवाचकलुप्तोपमायां 'चन्द्रमुखः सुलम्' इत्यादिसाम्यलदाकप-दवलुपमायां चाव्याप्त्यापत्तेश्च । किं च वाच्यमित्यत्र विधेयतया वाच्यतो-च्यते अनुवाद्यतया वा[5] । आद्ये

---

१- समाक्रान्त-क,ग २- संकरप्रकरणात् -क,ख,ग ३- अपि" इत्यधिकं-क-गयोः
४- विस्पष्टसादृश्या-ग ५- अपि इत्यधिकं क-ख-ग पुस्तकेषु

'स कर्णन्महतीं सेनां पूर्वसागरगामिनीम् ।

वभौ हरजटाभ्रष्टां गंगामिव भगीरथः ।।'

इत्यादावेवेदं लक्षणं स्यात् ।

'स ययौ प्रथमं प्राचीं तुल्यः प्राचीनवर्हिषा ।

अहितान[1]निलोद्धूतैस्तर्जयन्निव केतुभिः ।।'

इत्यादौ न स्यात् । द्वितीये यत्र व्यतिरेकालंकारे साम्यस्य निषेधायानु[2]याथता 'मुखेन निष्कलंकेन न समस्तव चन्द्रमाः' इत्यादौ, तत्रापीदं लक्षणं स्यात् । न च निषेधाप्रतियोगित्वेन वाच्यमिति विशेषणीयम् ।

'असिमात्रसहायोऽपि प्रभूतारिपराभवे ।

नैवान्यतुच्छजनवत्सगर्वोऽयं महाद्युतिः ।।'

इति व्यतिरेके तथाप्यतिव्याप्तेः । न च निषेधप्रतियोगिकोट्यननुप्रविष्टतया वाच्यमिति विशेषणीयम् ।

'वृथा चरसि किं भृंग तत्र तत्र वनान्तरे ।

मालत्याः सदृशीं क्वापि भ्रमन्नपि न लप्स्यसे ।।'

इत्युपमानलुप्तायामव्याप्तेः । तत्र, सदृशलाभनिषेधे साम्यस्यापि प्रतियोगिकोटिनिविष्टत्वात् । तस्माद्विधानाथो[3]क्तलक्षणमप्ययुक्तम्[4] ।

यत्तु सरस्वतीकण्ठाभरणो[5]क्तं लक्षणम्--

'प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः ।

भूयोऽवयवसामान्ययोगः सेहोपमा मता ।।'

इति, तदपि गुणक्रियादीनां परस्परसादृश्यवर्णनात्मिकायाम् --

'ससज्जुरश्वक्षुण्णा[6]नामेलानामुत्पतिष्णवः ।

तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ।।'

इत्याद्युपमायामव्याप्तम् ।

'उद्भग्न[7]तरुणारिमणोपमर्द-

मग्नोन्नतस्तननिवेशनिभं हिमांशोः ।

---

१- अनुलोमानिलोद्धूतैः ख-२- निषेधात् प्रागनुवादयता-क,ग
३- अपि इत्यधिक क-ख-ग पुस्तकेषु ४- अपि -क-ख-ग पुस्तकेषु, नास्ति
५- भरणोक्तोक्तं-ख ६- ससज्जुरश्व--क (?) ख, ग ७- भुग्नोन्नत-क

बिम्बं कठोरबिसकाण्डकडारमेत-

द्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ।।"

"सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धि नारंगकम्" इत्यादौ प्रसिद्धिरहि-

तोपमानायां कल्पि[1]तोपमायां चाव्याप्तम् ।

यत्त्वलंकारसर्वस्वकृतोक्तम्- "उपमानोपमेययोः साधर्म्ये[2] भेदाभेदतु-

ल्यत्वे वोपमा[3] । साधर्म्ये त्रयः प्रकाराः । भेदप्राधान्यं दीपक[4]तुल्ययोगिता-

दृष्टान्तप्रतिवस्तूपमासहोक्तिव्यतिरेकादिषु । अभेदप्राधान्यं रूपकपरिणाम-

भ्रान्तिमदुल्लेखादिषु । द्वयोस्तुल्य[5]त्वं यथास्यामुपमायाम् । अत्र ह्युपमानो-

पमेयासाधारणरूपाभ्यां भेदः साधारणधर्मेणाभेदश्चेति द्वयोरपि तुल्यतैव"

इति तदप्युप[6]मानोपमेयातिव्याप्त्यादिदुष्टमिति स्पष्टमेव । तस्मादु[7]र्वचमस्या

लक्षणमिति[8] । अत्रोच्यते--

"व्यापार उपमानाख्यो भवेद्यदि विवक्षितः ।

क्रियानिष्पत्तिपर्यन्तमुपमालंकृतिस्तु सा ।।"

उपमानव्यापार उपमितिक्रियानिष्पादको व्यापारः सादृश्यवर्णना ।

सो[9]ऽयमुपमितिक्रियानिष्पत्तिपर्यन्तं विवक्षि[10]तश्चेदुपमालंकार इत्यर्थः । तथा

च व्यतिरेके नातिव्याप्तिः । तत्र सादृश्यवर्णनासत्त्वेऽपि "मुखेन निष्कलं-

केन" इत्यादौ साक्षात्तस्यैव निषेधेन, "नैवान्यत्तुच्छजनवत्" इत्यादौ तत्प्र-

योजकधर्मनिषेधेन[11] चोपमितिक्रियाया अनिष्पत्तेः । नाप्यनन्वयेऽति-

व्याप्तिः । तत्रापि स्वेन स्व[12]स्य सादृश्यस्य सदृशान्तरव्यवच्छेदे रुद्रोदन-

वपोत्खननाद्यर्थवादेऽसदर्थस्य निन्दास्तुत्योरिव द्वारमात्रतया वर्ण्यमानत्वे-

नोपमितिक्रियाया अनिष्पत्तेः । अन्यथा स्वस्य स्वेनोपमितिक्रियानिष्पत्तौ[13]

सदृशान्तरव्यवच्छेदेऽपि सर्वथानुपमत्वद्योतनं फलं न स्यात् । आहुश्च तस्य

तदेव फलं भामहादयः -

"यत्र तेनैव तस्य स्यादुपमानोपमेयता।

असादृश्यविवक्षातो वदन्ति तमनन्वयम् ।।" इति ।

अत एव वर्ण्यमानमपि स्वस्य स्वस्मिन्साधर्म्यं नान्वेतीत्यनन्वयपदव्यु-

---

१- कल्पितोपमानायां-क २- साधर्म्यभेदाभेद-ख-३- चोपमा-क,ख,ग- ४- दीपक-
ग-पुस्तके नास्ति. ५- स्तुल्यार्थत्वं-क ६- तदप्युपमेयोपमातिव्याप्त्यादि--
क,ख,ग ७- दुर्वचमस्या-ख ८- चेत् इत्यधिकं क-पुस्तके ९- सेयम-ख-१०- विवक्षिता
घ-११- न इत्यधिकं खपुस्तके १२- स्वस्य स्वेन-ख १३- निष्पत्तौ:-ख

[1]त्पत्तिमलंकारसर्वस्वकारादयो वदन्ति । ततश्च यथाम्भसि कतकरज:-संयो-जनेन रजोन्तरव्यवच्छेदे सति कतकरजसोऽपि विलयकृत्सर्वथानाविलमम्भ: सिध्यति तथा 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यादौ स्वेन सादृश्य-वर्णनया सदृशान्तरव्यवच्छेदे सति वस्तुत: स्वेनाप्युपमाया असंभवादनु-पमं रामराव[2]णयोर्युद्धमित्यत्रैव कविसंरम्भ इत्युपमितिक्रियाया अनिष्पत्ते-नानन्वयेऽतिव्याप्तिशंकावकाश: । एवं प्रतीपेऽपि यत्रोपमित्यनिष्पत्ति: ।

'आकर्णय सरोजाक्षि वचनीयमिदं भुवि ।
शशांकस्तव वक्त्रेण पामरैरुपमीयते ।।'

इत्यादौ न तत्रातिव्याप्तिशंका । उपमितिक्रियानिष्पत्तिविरहात् ।

'गर्वमसंवा[3]ह्यमिमं लोचनयुगलेन किं वहसि भद्रे ।
सन्तीदृशानि दिशि दिशि सर:सु ननु नीलनलिनानि ।।'

इत्यादि प्रतीपमुपमेयोपमा चेत्युभयमपि संग्राह्यमेवेति न तद्व्यापनं लक्षणस्य दोष: । तथा ह्युदाहृतं प्रतीपं तावदुपमाविशेष एव । सादृश्य-वर्णनस्य प्रकृतविषयत्व इवाप्रकृतविषयत्वेऽपि स्मृतिरूपकसंदेहभ्रान्त्यने-कधाग्रहणापह्नवसंभावना[4]संभववस्तुसं[5]बन्धनिबन्धननिर्दिष्टसमर्थनादीनामिवा-लंकारान्तरत्वायोगात् । अन्यथा तेषामपि प्रकृतविषयत्व एव स्मरणरूपकससंदे[6]-हभ्रान्तिमदुल्लेखापह्नुत्युत्प्रेक्षानिदर्शनार्थान्तरन्यासाद्यलंकारत्वम् [7] अप्रकृतवि-षयत्वे [8] चानलंका[9]रत्वमिति कल्पनाप्रसंगात् । स्मृत्यादयश्च प्रकृतविषया [10]इवाप्रकृतविषया अप्यलंकारभूतास्तत्र तत्रोदाहरिष्यन्ते । न चोपमायामयं नियमो यदप्रकृतेन प्रकृत[11]सादृश्यवर्णनात्मनैव तथा भाव्य[12]मिति । समुच्चयो-पमाद्युदाहरणेषु प्रकृतयोरेवाप्रकृतयोरेव वा सादृश्यवर्णनस्याप्युपमात्वांगी-कारात् । तत्प्रकृतेनाप्रकृतस्य सादृश्यवर्णनमप्युपमैवेति युक्तम् । एवं चो-पमेयोपमापि प्रकृताप्रकृतविषयोपमाद्वयरूपतया नालंकारान्तरतां भजते । अन्यथा तत्प्रकरणोदाहरिष्यमाणपरस्परोपमाया अप्यलंकारान्तरत्वप्रसंगात् । परस्परभ्रमनिबन्धनादिष्वप्यलंकारान्तरतापत्तेश्च । न चानन्वयप्रतीपोपमे-

---

१- व्युत्पत्ति-क-२- रामरावणयुद्धम्-क,ख,ग-३- संभाव्य-क,ख,ग
४- संभावनाअसंभव-ख ५- संबन्धनेननिबन्धननिर्दिष्ट-ख संबंधनिर्दिष्टं --ग,
६- संदेह -घ ७- अप्रकृताप्रकृतविषयत्वेऽपि--ख ८- अपि इत्यधिकं ख-ग-घ पुस्तकेषु ९- अलंकारान्तरत्वमिति- ख, चालंकारान्तरत्वमिति -ग
१०- इवाप्रकृतविषया गपुस्तके नास्ति ११- प्रकृत: -ख १२- भवितव्यमिति -ग

योपमासु सादृश्यवर्णनस्य पृथङ्निरूपणस्य चाविशिष्टत्वेनानन्वयस्यानुपमात्वमितरयोरुपमात्वं च वक्तुमयुक्तमिति वाच्यम्[१]। यत्रोपमितिक्रियानिष्पत्तिस्तत्रोपमाशब्दप्रवृत्तिनिमित्तसद्भावेन, यत्र तदनिष्पत्तिस्तत्र तदभावेन च वैषम्यस्य स्फुटत्वात्। इममेव विशेषमभिप्रेत्य काव्यप्रकाशिकादिलक्षणेष्वनन्वयव्युदासार्थमेव यत्नः कृतो नोपमेयोपमादिव्युदासार्थम्[२]।[३] उपमेयोपमादेरुपमान्तर्गतत्वेऽपि व्यंग्यादिकृतवैचित्र्यविशेषेण पृथग्गणनं न विरुध्यते। रूपकपरिणामवत्। "उभौ यदि व्योम्नि पृथक्प्रवाहौ" इत्यादौ[४] लक्षणाभावो न दोषः। यदि तथाभूतौ प्रवाहौ स्यातां तर्ह्युपमीयेत। न च तौ संभवतः। तस्मान्न केनाप्युपमीयत इत्युपमापरपर्यायोऽयमित्यनिष्पत्तावप्युपमात्वस्वीकारे तत्रोपमाशब्दस्य पारिभाषिकत्वापत्तेः। किंतु तत्रातिशयोक्तिविशेषोऽलंकारः। अत एव काव्यप्रकाशिकायां "प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्" इत्यतिशयोक्तिषु परिगणय्य यद्यर्थोक्तौ कल्पनस्य

"राकायामकलंकं चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्।

इत्युदाहृतम्।

"पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद्विशदस्य तस्य[५] ताम्रौष्ठ[६]पर्यस्तरुचः[७] स्मितस्य।।"

इति तु कविकल्पितोपमानाया[८] उत्पाद्योपमेति व्यवहृताया उदाहरणम्। तत्र यद्युत्पाद्यस्योपमानस्य संभावितया तेनोपमितिनिष्पत्तेर्लक्षणमस्त्येवेति नाव्याप्तिः। न चैवं "चन्द्रबिम्बादिव विषं" इत्यसंभावितोपमायामव्याप्तिः। तत्रासंभावितेनैवोपमानेनोपमितिक्रियानिष्पत्तेः। कविना विवक्षितत्वेन विवक्षानुसार्युपमितिक्रियानिष्पत्तिसद्भावात्[९]। नहि "वस्तुसदर्थ[१०]निबन्धनोपमितिक्रियानिष्पत्तिरुपमा"[११] इति लक्षणमुच्यते किं तु कविविवक्षानिबन्धना। अत एव श्लोके विवक्षित इति विशेषणमर्थवत्। अन्यथा

---

१- शक्यम्-ख २-- व्युदासार्थः -ग ३- उपमेयोपमादेः ख- पुस्तकेनास्ति
४- इत्यत्र-ख ५- तस्याः-क ६- ताम्रोष्ठ--क,ख ७- रुचे-ख ८- कविकल्पितोपमाया-ख ९- संभवात्- क,ख,ग १०- सदर्थानिबन्धना-घ, ११--
निष्पत्तिरुपमितिलक्षणम्-क

'चन्द्र इव मुखम्' इत्यादावपि लक्षणं न स्यात्। चन्द्रगतकान्त्यतिशयस्य वस्तुतो मुखेऽभावेन विवक्षानुसरणं विना गत्यभावात्। 'चन्द्रधवला कीर्तिः' इत्यादौ च सर्वथैव लक्षणं न स्यात्। कीर्तौ धावल्यस्य[1] लेशतोऽप्यभावात्। न चैवमनन्वयेऽपि कविविवक्षया स्वस्य स्वेनोपमितिक्रियानिष्पत्तिः संभवतीति वाच्यम्। सर्वथैवानुपपत्त्यर्थोऽतेन कविसंरम्भे सति तथा विवक्षानुदयात्[2]। 'वृथा चरसि किं भृंग' इत्यादौ सादृश्याधिकरणस्यानुपलम्भोक्त्यो[3]-पलभ्यमानेषु सादृश्यनिषेधपर्यवसानेऽप्यनुपलभ्यमानगतसादृश्याभ्यनुज्ञानात्त्रोपमितिक्रियानिष्पत्तिरस्तीति नाव्याप्तिः। अत एव तस्य विशिष्यानुपादानादुपमानलुप्तता। एवम्

'निरूप्यमाणं कविना सादृश्यं स्वात्मनो न चेत्।
प्रतिषेधमुपादाय पर्यवस्यति सोपमा।।'

इत्यपि लक्षणमनुसंधेयम्।

उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनमुपमा।
स्वनिषेधापर्यवसायि[4] सादृश्यवर्णनमुपमा।

इति द्विविधमप्येतदुपमासामान्यलक्षणम्। अलंकारभूतोपमालक्षणं त्वेतदेवादुष्टाव्यंग्यत्वविशेषितम्। विशिष्टोपमादिस्थले विशेषणाद्युपमानां वाच्यभूतविशिष्टोपमादिसिद्ध्यंगत्वात्[5]। वाच्यसिद्ध्यंगरूपगुणीभूतव्यंग्यतयैव[6] तासां नालंकारतेति न तदव्यापनं दोषः। 'न पद्मं मुखमेवेदं' इत्यादौ नोपमालंकारः। किंतु प्रतिषेधादिप्तप्रसक्तितया[7] भ्रान्तिमान्, तदुपपादकतयोपमा चेत्युभयं व्यंग्यम्। तथापि भ्रान्तिमदादिकमपि साधर्म्यमूलत्वमात्रेणोपमामध्ये परिगणयता[8] दण्डिना तत्वाख्यानोपमेत्येतादृशव्यवहारः कृतः, परमिति न तत्राप्यव्याप्तिर्दोष[9] इति दिक्।

सा चेयमुपमा द्विविधा पूर्णा लुप्ता च।
उपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामुपादाने पूर्णा।
तेषामेकस्य द्वयोस्त्रयाणां वा लोपे सति लुप्ता[10]।

---

१- धवलस्य (?) -क २- विवक्षानुपादानात्-क-३- स्यानुपलम्भो-क-
४- स्वनिषेधपर्यवसायि-ख ५- वाच्यभूतविशिष्टोपमादिसिद्ध्यर्थत्वात्-ख, [illegible]भूतसिद्ध्यंगत्वात्-ग ६- व्यंग्यतेव-ख ७- प्रतिषेधोन्नीतप्रसक्ति ख ७- अपि - ग पुस्तके नास्ति ९- एणा इत्यधिकं क-ख-ग-पुस्तकेषु
१०- च इत्यधिक गपुस्तके

पूर्णायां क्वचित्साधारणधर्मस्यानुगामितया निर्देशः। क्वचिद्वस्तुप्रतिवस्तुभावेन। क्वचिद्बिम्बप्रतिबिम्बभावेन। क्वचिच्छ्लेषेण। क्वचिदुपचारेण। क्वचित्समासान्तराश्रयेण। क्वचिदेषां यथासंभवं मिश्रणेन। लुप्तायां तु नैवं भेदाः। तस्यां साधारणधर्मस्यानुगामित्वनियमात्। किं तु प्रकारान्तरेण भेदा वक्ष्यन्ते। तत्र पूर्णायां धर्मस्यानुगामिता यथा--

'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये[1]।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥'

औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध इति वागर्थयोर्नित्यसंबन्धित्वं प्रसिद्धम्। उमामहेश्वरयोरप्यनयोर्न पृथग्भावः चन्द्रचन्द्रिकयोरिवेति तत्प्रसिद्धम्। तथा च नित्यसंबन्धित्वरूपोऽत्र साधारणधर्मोऽनुगामितया निर्दिष्टः। यद्यप्युमामहेश्वरयोर्वागर्थवन्नित्यसंबन्धित्ववर्णनेन तयोर्निरतिशयपरस्परप्रेमशालित्वं महामहिमत्वमित्यादि[2] व्यज्यते तथापि न ध्वनि[3]गुणीभूतव्यंग्यव्यवहारः। न खलु व्यंग्यसंस्पर्शप्रतिभासादेवात्र चारुताप्रतीतिः, किं तु वाच्यवैचित्र्यप्रतिभासादपीति प्रायस्तत्र संभव[4]द्रसादि[5]रूपं व्यंग्यमलंकारान्तरं चागणयित्वैव तत्तदलंकारा उदाह्रियन्ते।

एकस्यैव धर्मस्य संबन्धिभेदेन द्विरुपादानं वस्तुप्रतिवस्तुभावः। स तु शुद्धो न संभवति। किं तु विशेषणतया विशेष्यतया वा सर्वत्र बिम्बप्रतिबिम्बभावकरम्बितः। वस्तुतोऽभिन्नयोर्धर्मयोः परस्परसादृश्यादभिन्नतयाध्यवसितयोर्द्विरुपादानं बिम्बप्रतिबिम्बभावः। तत्र वस्तुप्रतिवस्तुभावस्य विशेषणता यथा--

'यान्त्या मुहुर्वलितकंधरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥'

अत्र बिम्बप्रतिबिम्बभावेन निर्दिष्टयोः कंधरावृन्तयोर्वलितावृत्त-

---

१- वागर्थ इत्यारभ्य चरणत्रितयं खपुस्तके नास्ति २- 'च' इत्यधिक कपुस्तके ३- ध्वनि - गपुस्तके नास्ति ४- संभवाद्रसादि--- क ५- रूपव्यंग्यमलंकारान्तरं ग

ब्दाभ्यामेक एव धर्मो विशेषणतया निर्दिष्ट: । विशेष्यता यथा--

'सा तेन जगृहे साध्वी हठात्साध्वसकम्पिता ।

वानरेणातिलोलेन वाताधूतेव[1] बल्लरी ।।'

अत्र साध्वसवातयोर्विम्बप्रतिबिम्बभावापन्नयो: कम्पित[2]धूतशब्दाभ्यामेक एव धर्मो विशेष्यतया निर्दिष्ट: । शुद्धबिम्बप्रतिबिम्बभावो यथा-- 'पाण्ड्योऽयमंसार्पितलम्बहार:' इत्यादि । अत्र हरिचन्दनबालातपौ हारनिर्झरौ च बिम्ब[3]प्रतिबिम्बभावेन निर्दिष्टौ । श्लेषो यथा--

'नरसिंह महीपाल समस्तोऽपि रिपुस्तव ।

पारावारसमानत्वं दधाति स्वपदच्युत: ।।'

उपचारो यथा--

'उद्भवन्तमुदितार्चिषं[4] ततो भानुमन्तमिव हेमभूभृत: ।

पंकजैरिव कुमारमीक्षणैर्विस्मयेन विकचै: पपुर्जना: ।।'

अत्र विकास: पुष्पधर्म उपमेयेषु वीक्षणे[5]षूपचरित: । समासभेदाश्रयणं यथा--

'तया विवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षु:कुमुद: कुमार्या ।

प्रसन्नचेत: सलिल: शिवोऽभूत्संसृज्यमान: शरदेव लोक: ।।

अत्र विवृद्धाननचन्द्रकान्त्येति विशेषणं देव्यां शरदि च समासभेदेन प्रवर्तते । मिश्रणेष्वनुगामित्वबिम्बप्रतिबिम्बभाव[6]योर्मिश्रणं यथा--

'भीमकान्तैर्नृपगुणै: स बभूवोपजीविनाम् ।

अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णव: ।।'

अत्राधृष्यत्वमभिगम्यत्वं[7] च नृपगुणानां यादोरत्नानां च बिम्बप्रतिबिम्बभावमपेक्ष्य लब्धात्मकं साधारणो[8] धर्म: । अनुगामित्वश्लेषयोर्मिश्रणं यथा--

'गते तव भ्रातरि वत्स[9] पंचतां चिराय नश्चान्द्रमसं कुलं महत् ।

अदृष्टसंतानतया न शोभते वनं हरे: प्राङ्मथनादिवोदधे: ।।'

अत्र संतानशब्दश्लेषमपेक्ष्य लब्धात्मकं शोभारहितत्वं साधारणो धर्म: । अनुगामित्वोपचारयोर्मिश्रणं यथा--

---

१- वाताधूतेव-क २- कम्पिताधूतशब्दाभ्याम्-क,ख,ग,घ ३- बिम्बभावेन-ख
४- उदितार्चिषस्ततो-ख ५- ईक्षणेषु-क,ग- ६- भावयोरनुमिश्रणं-क,ख
७- अधृष्यमभिगम्यत्वं-क-८- साधारणधर्म:-ख-९- वत्स-क

'तडिदुज्ज्वलहेतिभासुरः कुरराजध्वजिनीं विलोकयन् ।
प्रिययेव भिया सकम्पया परिरेभे धृतधर्मपायसा ।।'

अत्र सकम्पत्वानुगामिधर्मापेक्षया लब्धचाक्षुभावं परिरम्भकर्तृत्वं भीत्यामुपचरितम् । अनुगामित्वसमासभेदाश्रयणयोर्मिश्रणं[1] यथा--

'श्येनपक्षपरिधूसरालकाः सांध्यमेघरुधिरार्द्रवाससः ।
अंगना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः ।।'

अत्र श्येनपक्षपरि[2]धूसरेत्यादिविशेषणयोः समासभेदाश्रयणेन साधारण्यमपेक्ष्यानवलोकनक्षमत्वमनुगामिधर्मश्चारुतातिशयं पुष्णाति । वस्तुप्रतिवस्तुभावबिम्बप्रतिबिम्बभावयोर्मिश्रणं यथा--

'लिंगैर्मुदः सं[3]वृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाच्छलेन[4] ।।'

अत्र बिम्बप्रतिबिम्बभावापन्नयोः क्रोधनक्रयोः संवृतगूढशब्दाभ्यामेक एव धर्म उक्त इति बिम्बप्रतिबि[5]म्बभाववस्तुप्रतिवस्तुभावः । संतोषचिन्हप्रसादयोर्बिम्बप्रतिबिम्बभावश्च । श्लेषबिम्बप्रतिबिम्बभावयोर्मिश्रणं यथा--

'पार्थनाशमुदिता नृपात्मजा बाष्प[6]मुरभिनीतमन्यवः ।
आतपक्वथितपाथसो बहिः शीतगर्भसलिला इव ह्रदाः ।'

अत्र बा[7]ष्पशब्दे श्लेषस्य नृपात्मजह्रदविशेषणानां बिम्बप्रतिबिम्बभावमपेक्ष्य चारुता । उपचारबिम्बप्रतिबिम्बभावयोर्मिश्रणं यथा--

'सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्वामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ।।'

अत्राश्वासितेन्द्रसिक्तेत्यनयोर्वरोरगाणां च बिम्बप्रतिबिम्बभावमपेक्ष्योद्वमनमुपमानोपमेययोर्द्वयोरप्युपचरितम् । मुख्यार्थस्य द्वयोरप्यसंभवात् । मुख्यार्थे तस्य ग्राम्यत्वाच्च । तदाहुः[8]-

'निष्ठ्यूत[9]गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्तु ग्राम्यकक्षां विगाहते ।।' इति ।।

---

१- भेदाश्रयणं यथा-क-२- परि-ग- पुस्तके नास्ति ३- संवृत-क,ख,ग-
४- मुपदाच्छलेन -ख-५- बिम्बप्रतिबिम्बभाव-कपुस्तकेनास्ति, बिम्बप्रतिबिम्बवस्तुप्रतिवस्तुभावः -ख- ६- अभिनीत-ख, अविनीत-घ- ७- बाष्पशब्दश्लेषस्य-क,ग ८- यदाहुः- क,ख,ग

एवमन्यदपि द्वयोर्मिश्रणमूह्यम् । अनुगामित्वबिम्बप्रतिबिम्बभावसमासभेदाश्रयणानां मिश्रणं यथा--

> 'नृपं तमावर्तमनोज्ञनाभिः[१] सा व्यत्यगादन्यवधूर्भवित्री ।
> महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ।।'

अत्र व्यत्यगादित्यनुगामिधर्मः । अन्यवधूर्भवित्री सागरगामिनीत्यनयोर्बिम्बप्रतिबिम्बभावः । आवर्तमनोज्ञनाभिरित्यत्र[२] समासभेदाश्रयणमित्येतेषां मिश्रणम् । अनुगामित्वश्लेषोपचाराणां मिश्रणं यथा--

> 'असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
> वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ।।'

अत्रातुरदृष्टिवीक्षित इत्यादावनुगामिता । रामादिशब्दे[३] श्लेषः । चुम्बितशब्दस्य वसन्तपदे उपचारः । इत्येतेषां मिश्रणम् । एवमन्येऽपि मिश्रणोदाहरणभेदाः स्वयमेव द्रष्टव्याः । बिम्बप्रतिबिम्बभावोदाहरणेषु कश्चिद्विशेषः । क्वचित्प्रसिद्धसाधर्म्यतया प्रतीयमानसाधर्म्ययो[४]र्बिम्बप्रतिबिम्बभावः । यथा- 'पाण्ड्योऽयमंसार्पितलम्बहारः' इत्यादौ । क्वचिदप्रसिद्धसाधर्म्यतया येनकेनचित्प्रकारेणोपात्तसाधारणधर्मयोर्बिम्बप्रतिबिम्बभावः । यथा-- 'तया विवृद्धाननचन्द्रकान्त्या' इत्यादौ । अत्र हि शरदपर्णयोः स्वतोऽप्रसिद्धसाधर्म्ययोर्विवृद्धाननेत्यादिना समासभेदाश्रयणेनोपात्तसाधारणधर्मयोरेव बिम्बप्रतिबिम्बभावः । यथाकथंचित्साधर्म्यप्रतीतिं विना बिम्बप्रति[५]बिम्बभावो न संभवत्येव ।

> 'यथा त्वं गुणवाँल्लोके तथा ते निर्गुणो रिपुः[६] ।
> इतीदमुपमानं तु विपरीतमिति स्मृतम् ।।'

इत्युक्तरूपाया[७]: विपरीतोपमायाः कथं निर्वाहः । तत्र हि सगुणत्वनिर्गुणत्वयोर्नोपात्तेन न[८] वा प्रतीयमानेन[९] धर्मेण साधर्म्यप्रतीतिरस्ति । नैष दोषः । तत्राप्यात्यन्तिकत्व[१०]स्वाभाविकत्वादिधर्मेण प्रतीयमानेन तयोः साधर्म्यप्रतीतेः । अन्यथा यथाशब्दोदितस्य सादृश्यस्य सर्वथा निरालम्बनत्वप्रसङ्गात् । एवं[११] पूर्णाया दिगुदाहृता ।

---

१- गभीरनाभिः -क,ख,ग २- गभीरनाभि-क,ग, सरोजनाभि-ख- ३- रामादिशब्दश्लेषः ख,घ ४- सादृश्ययोः -- क, ग ५- बिम्बभावो- ख ६- रिहः (?) ख-७- इत्युक्तरूपाय -घ ८- न इति गपुस्तके नास्ति ९- प्रतीयमानेन वा -ग १०- तत्राप्यन्त्यन्ति -- ख ११- एषा-ख

लुप्ता[१]ऽष्टविधा-वाचकलुप्ता, धर्मलुप्ता, उपमानलुप्ता, वाचकोपमानलुप्ता, धर्मोपमानलुप्ता, धर्मवाचकलुप्ता, वाचकोपमेयलुप्ता, धर्मोपमानवाचकलुप्ता चेति[२]। क्रमेणोदाहरणानि--

'कैलास[३]गौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम्।
अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भतुल्यम्।।'

अत्र कैलासगौरमित्यत्र वाचकलोपः। निकुम्भतुल्यमित्यत्र धर्मलोपः। वाचकलोपः सर्वत्र समासा[४]दिविधायकशास्त्रकृ[५]तः। धर्मलोपस्त्वैच्छिकः। प्रभावादिना निकुम्भतुल्यमित्यपि वक्तुं शक्यत्वात्।

'यच्चोराणामस्य च समागमो यच्च तैर्वधोऽस्य कृतः।
उपनतमेतदकस्मादासीत्तत काकतालीयम्।।'

इत्यत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ। तेन काका[६]गमनमिव तालपत[७]नमिव काकताल[८]मिति इवार्थे समासाच्च तद्विषयात्[९]' इति ज्ञापकात्सुप्सुपेति समासः।उभयत्रोपमेयं क्रमेण देवदत्तागमनं दस्यूपनिपातश्च। तेन देवदत्तदस्यु[१०]समागमः काकतालसमागमसदृश इति फलति। ततः काकतालमिव काकतालीयमिति द्वितीये इवार्थे समासाच्च तद्विषयात्' इति छप्रत्ययः। ततश्च पतता तालफलेन यथा काकस्य वध[११] एवमुपनिपतितैर्दस्युभिर्देवदत्तस्य वध इत्यर्थः। यदाह भगवान्भाष्यकारः-'एवं तर्हि द्वाविवा[१२]र्थौ काकागमनमिव तालपतनमिव काकतालं काकतालमिव काकतालीयम्' इति। तच्च विवृतं कैयटेन--

'तत्र काकागमनं देवदत्तागमनस्योपमानम्। तालपतनं दस्यूपनिपातस्य। तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति। अकस्मादुपनतत्वं च समानो धर्मः। तदाह वृत्तिकारः --तेन काकतालीयं नामाकस्मादुपनतं चित्रीकरणमुच्यते इति। ततश्चात्र काकागमनतालपतनसमागमन[१३]रूपस्य पत्त्तालकृतकाकवधरूपस्य चोपमानस्यानुपादानात् छ प्रत्ययार्थोपमायामुपमानलोपः[१४]।समासार्थोपमायां वाचकोमानलोपः।अत्रैव 'किमिति ब्रूमो वयमिदम्' इति तृतीयपादपाठे प्रत्ययार्थोपमायां धर्मोपमानलोपः। समासार्थो[१५]पमायां धर्मोपमानवाचकलोपः। अत्र

---

१- अष्टधा-ग २-चेति इति खपुस्तके नास्ति ३- कैलासतुल्यम् इति प्रथमपदमात्रं खपुस्तके अस्ति ४- समासविधायक-घ- ५- कृत इति खपुस्तके नास्ति ६- काकागमनमिव-ख ७- पनमिव ख-८- काकतालीयमिति -ख ९- तद्विषयादिज्ञापकात्- ख, १०- देवदत्तस्य समागम-ख ११- काकवधः -क,ख,ग १२- द्वाविवार्थौ-क ख,घ१३- -समागरूपस्य -क, समागमरूपस्य- ख-- १४- प्रत्ययार्थोपमाया धर्मोपमानलोपः ख-१५- समासार्थोपमायाम् इत्यारभ्य समासपदत्वात् (२५ पृ०)इत्यन्तं खपुस्तके नास्ति

धर्मलोपमात्रमैच्छिकम् ।

'यं त्वं पालयसे धर्मं वृत्त्या[१] च नियमेन च ।

स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ।।'

अत्र राघवः शार्दूल इवेत्यर्थे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासे धर्मवाचकयोर्लोपः । अत्र वाचकलोपवद्धर्मलोपोऽपि शास्त्रीयः । सामान्याप्रयोग[२] एवैतत्समासानुशासनात् । धर्मवाचकलुप्तायां धर्मलोपस्यैच्छिकत्वमपि संभवति । यथा--

'नृणां यं सेवमानानां संसारोऽप्यपवर्गति ।

तं जगत्यजन्मत्यर्यश्चञ्चा चन्द्रकलाधरम् ।।'

अत्रापवर्ग इवाचरतीत्यर्थेऽपवर्गतीत्यत्राचारार्थस्य क्विपो लोपाद्वाचकवद्धर्मस्यापि लोपः । चञ्चेत्यत्र चञ्चा तृणपुरुष इवेत्यस्मिन्नर्थे 'इवे प्रतिकृतौ' इति विहितस्य कनो[३] 'लुम्मनुष्ये' इति लुब्विधानाद्वाचकलोपो धर्मलोपश्च । अस्य श्लोकस्य

'यद्भक्तानां सुखमयः संसारोऽप्यपवर्गति ।

तं शंभुमजन्मत्यर्यश्च जीवात्महिताकृते: ।।'

इति पाठेनोभयत्रापि[४] धर्मस्य श्रवणमपि संभवति ।

'रूपयौवनलावण्यस्पृहणीयतराकृतिः ।

पुरतो हरिणाक्षीणामेण पुष्पायुधीयति ।।'

अत्र वाचकोपमेययोर्लोपः । रूपयौवनेत्यादिविशेषणसामर्थ्यात्स्वात्मानं पुष्पायुधमिवाचरतीत्यस्यार्थस्य गम्यमानत्वात् स्वात्मन उपमेयस्य लोपः कवेरैच्छिकः । न चैण इत्युपमेयस्योपादानमस्तीति शंक्यम्[५] । तस्य कर्मविभक्त्यभावेन पुष्पायुधीयतीत्यत्रोपमेयासमर्पकत्वात् । अत्रैव हरिणस्याक्षिणी इवायते अक्षिणी आसामित्यस्मिन्नर्थेऽनुशिष्टे हरिणाक्षीणामिति पदे धर्मोपमानवाचकानां लोपः । सर्वोऽप्ययं 'सप्तम्युपमानपूर्वपदस्य' इत्यादिशास्त्रकृत एव लोपः । त्रिलोपे धर्मलोपस्त्वैच्छिकोऽपि संभवति । यथा ---

---

१- घृत्या - ग २- सामान्यप्रयोग-घ- ३- क्वणो-ख ४- पाठे नोभयत्रापि-ख, घ ५- शंकनीयम्-ग

'यच्चौराणामस्य च' इति श्लोकस्य द्वितीयपाठे समासार्थोपमायाम् । एवं लुप्ताया[१] अष्टौ विधाः प्रदर्शिताः ।

काव्यप्रकाशिकाकारादिभिस्तु पूर्णायाः षड्विधाः लुप्तायास्तु धर्मलुप्तादिष्ववान्तरभेदेन केश्चिदेकोनविंशतिरन्यैर्विंशतिविधाः[२] प्रदर्शिताः । तत्रायं विभागः --पूर्णा तावद्द्विविधा[३] श्रौती आर्थी च । सादृश्यमात्रवाचकयथेवादिशब्दवती श्रौती । सादृश्यविशिष्टधर्मिपर्यन्ततत्तुल्यसदृशसंकाशादिशब्दवती[४] आर्थी । द्विविधापि वाक्ये समासे तद्धिते चेत्येवं षड्विधा पूर्णा । धर्मलुप्तापि पूर्णावदेव विभागवती । किं तु श्रौती तद्धिते न संभवतीत्येवं[५] पञ्चविधा । वाचकलुप्ता कर्मकर्तृणमुलोः कर्माधिकरणक्यचोः क्यङि णिनौ समासे चेत्येवं सप्तविधा । उपमानलुप्ता वाक्यसमासयोर्द्विविधा[६] । धर्मवाचकलुप्ता क्विप्समासयोर्द्विविधा[७] । धर्मोपमानलुप्ता वाक्यसमासयोर्द्विविधा उपमेयवाचकलुप्ता क्यचि एकविधा । धर्मवाचकोपमानलुप्ता समास एवैकविधेति । यदाहुः-

'पूर्णा लुप्ता च सा द्वेधा श्रौत्यार्थी चेति ते पुनः ।
द्विविधे प्रथमा वाक्ये समासे तद्धिते भवेत् ।।
तद्वल्लुप्तापि धर्मस्य लोपे श्रौती न तद्धिते ।
इवादिलोपे द्विविधे णमुलि क्यचि च क्यङि ।।
तथा णिनौ समासे च सप्तधा परिकीर्तिता ।
उपमानस्य लोपे तु द्विधा वाक्यसमासयोः ।
इवादिधर्मलोपेऽपि द्विविधा क्विप्समासयोः ।
धर्मोपमानयोर्लोपे वाक्यगा च समासगा ।।
इवादेरुपमेयस्य द्वयोर्लोपे भवेत्क्यचि ।
इवादिधर्मोपमानलोपे त्वेषा समासगा ।।' इति ।।

अत्रोदाहरणानि तन्मतरीत्या संगृह्यास्माभिर्लिख्यन्ते--

'यस्याज्ञा शिरसोह्यते सुमनसां वृन्दैर्यथा मालिका
बद्धा मुञ्चति यः पशूनिव जनान्यस्याप्रवद्भैभवम् ।

---

१- लुप्तोपमायाम्-क,ग-२- विंशतिर्विधाः-क- ३- द्विधा- क- ४- धर्मिपर्याप्त - ख, घ ५- तद्धितेन संभवति- घ-६- द्विधा-क ७- द्विधा-क

इयं शैवधिना समं हृदि भजन्त्यानन्दसारोपमं

यं धन्याः शशिवत्प्रसन्नवपुषे तस्मै नमः शंभवे ।।

अत्र षड्विधापि पूर्णा दर्शिता । तत्र प्रथमवाक्ये वाक्यगा श्रौती । द्वितीयवाक्ये समासगा श्रौती । 'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति वार्तिककृद्वचनेन पशुनिवेत्यस्य समासपदत्वात् । तृतीयवाक्ये तद्धितगा श्रौती । अभ्रवदिति षष्ठीसमर्थाद्वतेः 'तत्र तस्येव'[1] इति सूत्रेणेवार्थे विहितत्वात् । 'इयं शैवधिना समं हृदि भजन्ति' इत्यत्र वाक्यगा आर्थी । 'आनन्दसारोपमं' इत्यत्र समासगा आर्थी । इयमिति विशेषणद्वयमत्राप्यपेद्यते । अन्यथा धर्मलुप्तैव स्यान्न पूर्णा । शशिवदित्यत्र तद्धितगा आर्थी । तत्रत्यवतेः 'तेन तुल्यं क्रिया चेद्वतिः' इति तुल्यार्थे[2] विहितत्वात् ।

'मूर्तिर्यथा नवसुधा बलमिन्मणीव[3]

कण्ठप्रभा सुसदृशश्च जटास्तडिद्भिः ।

शलादि काञ्चननिभं पदमब्जदेश्यं

यस्येष मेऽस्तु हृदि दैवतसार्वभौमः ।।

अत्र पञ्चविधापि धर्मलुप्ता दर्शिता । तत्र मूर्तिर्यथा नवसुधेति वाक्यगा[4] । बलमिन्मणीव[5] कण्ठप्रभेति समासगा श्रौती[6] । उभयत्रापि भातीत्यादिक्रियाप्रयोगे सैव साधारणो धर्म इति धर्मलुप्ता न भवेत्, अतस्तदप्रयोगः । श्रौती तु धर्मलुप्ता तद्धिते न संभवति । षष्ठीसमर्थात्सप्तमीसमर्थाद्वा इवार्थे विहितस्य वतेर्धर्मोपादानं विनान्वयसौकर्याभावात् । न च[7] वाच्यं 'इवे[8] प्रतिकृतौ' इत्यधिकारे इवार्थे विहितस्य तद्धितस्य धर्मोपादानं विना नैराकांक्ष्यमस्ति । 'कुशाग्रीया बुद्धिः' शैलेयं[9] दधि[10] 'पौण्डरीकं मुखम्' इति दर्शनात् । अतस्तत्र श्रौती धर्मलुप्ता तद्धित उदाहर्तुं शक्यत इति 'इवे प्रतिकृतौ' इत्यधिकारे विहितप्रत्ययानां तुल्यार्थ एव विधानात् । अन्यथा तेषां सादृश्यविशिष्टधर्मिपर्यन्तत्वाभावेन कुशाग्रीया बुद्धिरित्याद्युपमेयसामानाधिकरण्याभावात्सादृश्यविधानमपि सदृशे पर्यवस्यति सामानाधि-

---

१- तस्यैवेति-ख २- तुल्यार्थे इति ग पुस्तके नास्ति ३- बलीमणीव -ख ४- श्रौती इत्यधिकं कपुस्तके ५- वर्णीव-ख ६- च इत्यधिक क-ख-ग पुस्तकेषु ७- नचनच- स ८- इवेच प्रतिकृता-ख ९- शिलेयं -स १०- दधिः - स

करण्यदर्शनादिति सूत्रे इवग्रहणं न विरुध्यते । सुसदृशश्चेत्यादि वा-[१]क्यत्रये क्रमेणार्थी वाक्यगा समासगा तद्धितगा च । अदेश्यमित्यत्रेण[२]दसमाप्तौ विहितोऽपि देश्यप्रत्ययः सादृश्ये प्रयुज्यते। सोऽपि सामानाधि-करण्यात्सदृश[३]पर्यवसायी । ननु सदृशादिशब्दप्रयोगे सादृश्यविशिष्टध-र्मिपर्यन्तत्वादार्थी[४]ति युक्तम्[५] । सादृश्यादिशब्दप्रयोगे कथम् । किं श्रौती उतार्थी । यथा--

'परस्परातिसादृश्यमद्रोज्झित[६]वर्त्मसु ।
मगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ।।'

इत्यादौ श्रौत्येवेति[७] ब्रूमः । तत्र तद्धितप्रकृत्या धर्मिपर्यन्ताभिधानेऽपि प्रधानप्रत्ययाभिहितस्य सादृश्यस्यैव वाक्यार्थान्वयित्वात् ।

'यं पश्यन्दीपदर्शं[८] सपदि[९] मनसिजः कीटनाशं स नष्टः
सान्ते योऽन्तःपुरीयत्य[१०]तिभजनकृतस्तं कुमारीयति द्राक् ।
मूल[११]स्तम्भायते यस्त्रिभुवनभवने कोकिलालापिनी यं
वामांगे कल्पवल्ली श्रयति कुवलयश्यामला तं भजामि ।।'

अत्र सप्तविधापि वाचकलुप्ता दर्शिता । तत्र दीपमिव पश्यन्नित्यर्थे दीपदर्शमिति[१२] कर्मणमुलि, कीट इव नष्ट इत्यर्थे[१३] कीटनाशं नष्ट इति कर्तृणमुलि[१४], सान्तेऽन्तःपुर इवाचरतीत्यर्थेऽन्तःपुरीयतीत्यधिकरणक्यचि, कुमारं स्कन्दमिवाचरतीति कर्मक्यचि, त्रिभुवनस्योत्पत्तौ मूलस्तम्भ इवा-चरतीत्यर्थे[१५] मूलस्तम्भायत इति कर्तृक्यङि, कोकिल इवालपतीत्यर्थे कोकि-लालापिनीति णिनौ, कुवलयमिव श्यामलेत्यर्थे कुवलयशमलेति समासे च क्रमेण वाचकलुप्ता द्रष्टव्या ।

'पूजनं सुरिपोस्तनोतु मे चित्तमन्यदपहाय चापलम् ।
यत्समं प्रियहितं न दृश्यते येन ना[१६]पि सदृशं निशम्यते ।।'

अत्र यत्सममिति समासे येन सदृशमिति वाक्ये चोपमानलुप्ता द्वि-विधापि दर्शिता ।

'वृथा मम भ्रमत्यहो[१७] मनः स्थिते महेश्वरे
श्रुतोऽस्ति तेन किं समः स्मृतोऽथवास्ति तत्समः ।

---

१- वाक्यत्रय-ख २- परिसमाप्तौ-ग-३- सादृश्यपर्यवस ख ४- इति इति क-ग-पुस्तकयोः नास्ति, आर्थीत्युक्त-ख- ५- युक्ता-ग ६- मद्राम्फित-ख-७- त्या( आर्थ्येव तत्र तद्धितप्रकृत्यर्थिपर्यन्ताभिधानपूर्वकमेव भावप्रत्ययेन सादृश्याभिधानात् । वस्तुतः इत्यधिक क-गपुस्तकयोः ८- दीपदर्शन -ख- ९- सपदि-खपुस्तके नास्ति १०- यत्यपिभजन -क, पुरीयानिजभजन- ख-११- मल -ख- १२- दीपदर्शनमिति -क १३- अस्मिन् इत्यधिक गपुस्तके १४- किंणमुलि -ख-१५-चरति-क-१६-नाति-क,नाहि (?) -ख-१७- भ्रमत्यहो (?) -ख

षडंध्रियत्वदः सदा तदंघ्रिपंकजद्वये[१]
चकोरकीयतु स्थिरं[२] तदानने शशिप्रभे[३] ।।"

अत्रावशिष्टाः षड्विधा अपि लुप्ताः प्रदर्शिताः[४] । तत्र[५] द्वितीयपादे वाक्यसमासयोर्धर्मोपमानलुप्ता द्विविधा[६], तृतीयपादे[७] क्यप्समासयोर्धर्मवाचकलुप्ता द्विविधा, चकोरकीयत्त्विति वाचकोपमेयलुप्ता, शशिप्रभ इति धर्मोपमानवाचकलुप्ता च क्रमेण द्रष्टव्या ।

एवमयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययविशेषगोचरतया शब्दशास्त्रव्युत्पादकौशलप्रदर्शनमात्रप्रयोजनो नातीवालंकारशास्त्रे व्युत्पाद्यतामर्हति । न वा लुप्तानामयं सामस्त्येन विभागः । तथाहि- धर्मलुप्ता वाक्यसमासतद्धितेषु दर्शिता । द्विर्भावेऽपि दृश्यते "पटुपटुर्देवदत्तः" इति । अत्र हि "प्रकारे गुणवचनस्य" इति सादृश्ये द्विर्भावविधानात् । पटुसदृश इत्यर्थः । यो हि शास्त्रादिष्वपटुरेव पटुवदभिनयति स उच्यते पटुपटुरिति । न तावदियं वाक्ये धर्मलुप्ता[८] । "कर्मधारयवदुत्तरेषु" इति समाससद्भावविधानेनैकपदसिद्धेः[९] । अत एव न समासेऽपि धर्मलुप्तेयम् । वाचकलुप्ता णिनिं विना कैश्चित्पञ्चधा दर्शिता । णिनिना सहापरैः सप्तविधा । क्यप्तद्धितयोरपि दृश्यते[१०]--

"यद्भक्तानां सुखमयः संसारोऽप्यपवर्गति[११] ।
तं शंभुमजन्मर्त्यश्चञ्चैवात्महिताकृते[१२] ।।"

इति विवृतमेतदधस्तात् । वाक्यसमासयोरुपमानलुप्तापि[१३] दर्शिता । उपनतमेतदकस्मादासीद्धत काकतालीयम्[१४]" इति तद्धितेऽपि[१५] दृश्यते । वाचकोपमानलुप्ता स्वरूपत एव नोदाहृता । सापि काकतालीयमिति प्रकृतिभूते[१६] समासे दृश्यते । धर्मोपमानलुप्तापि तद्धिते काकतालीयमित्यत्र दृश्यते । धर्मवाचकलुप्ता क्यप्समासयोरिव तद्धितेऽपि दृश्यते । "तं जगत्यमजन्मर्त्यश्चञ्चा चन्द्रकलाधरम्" इति हि[१७] प्रागुदाहृतम् । तस्माल्लुप्ताविभागे दिङ्मात्रप्रदर्शनमेवेदं प्राचां न तु सामस्त्येन विभागः । ये चान्ये काव्यालो-

---

१- द्वयो-ख-२- स्थिर-ख ३- शशिप्रभैः (?) -ख ४- दर्शिताःख५- तत्-ख
६- द्वितीया-ख ७- तृतीयापा-ख ८- वाक्यधर्मलुप्ता-ख ९- समासवद्भाव-क,ख,ग
१०- दृश्यते: (?) -ख ११- -वपवर्गति: (?) -ख १२- स्वहिताकृते:-क,ख,ग,
१३- अपि इति क-,गयोः नास्ति १४- दर्शिता इत्यारभ्य आसीद्धत इत्यन्तं खपुस्तके नास्ति किंच तद्धिते इति द्विरावृत्तम् १५- च इत्यधिकं कपुस्तके १६- काकतालीयप्रकृतिभूते-क,ख,ग १७- हि इति गपुस्तके नास्ति ।

कादिषूपमायां प्रकारभेदा दर्शितास्ते सर्वे तेष्वेव द्रष्टव्याः । दर्शिताश्चे-हापि लेशतो लक्षणविचारप्रस्तावे । रूपकप्रकरणे चास्याः प्रकारभेदा-न्कांश्चित्प्रदर्शयिष्याम[१]: ।

पुनश्चेयमुपमा संक्षेपतस्त्रिधा--क्वचित्स्ववैचित्र्यमात्रविश्रान्ता यथा-'स च्छिन्नमूलः क्षतजेन रेणुः' इत्यादौ । क्वचिदुक्तार्थोपपादनपरा यथा--'अनन्तरत्नप्रभवस्य[२]' इत्यादौ । यथा वा---

'विश्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः ।
वनतरुभंगध्वनिरिव हरिनिद्रातस्करः करिणः ।।'

क्वचिद्व्यंग्यप्रधाना[३] सा व्यंग्यस्य वस्त्वलंकाररसरूपतया त्रैविध्यात्त्रि-विधा । तत्र वस्तुध्वनिर्यथा--

दर्पान्धगन्धगजकुम्भकपाट[४]कूट[५]-
संक्रान्तिनिघ्नघनशोणितशोणरोचिः[६] ।
वीरैर्व्यलो[७]कि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ।।'

अत्र कृपाणस्य कुपितकालीकटाक्षसादृश्यवर्णनेन सकलरिपुबलक्षयः क्षणादेव करिष्यत इति वस्तु व्यज्यते । अलंकारध्वनिर्यथा--

'यशसि तव विकसिते नृप हिमकरकिरणच्छटा[८]धवले ।
भ्रमर इव पुण्डरीके विराजते विष्णुपदमेतत् ।।'

[९]अत्रोपमालंकारेण यशसः[१०] पुण्डरीकवद्वैपुल्यस्य, गगनस्य च[११] भ्रमरवदल्प-त्वस्य प्रतीतेराश्रयाश्रयिणोरनानुरूप्य[१२]लक्षणोऽधिकालंकारो व्यज्यते ।। रस-ध्वनिः 'वागर्थाविव' इत्यादा[१३]वुदाहृतः ।

क्वचिदेकत्रैव त्रिविधोऽपि ध्वनिर्दृश्यते यथा--

पश्यात्र नलिनीपत्रे बलाका परिदृश्यते ।
हरिन्मणिमये पात्रे शुक्तिकेव प्रतिष्ठिता[१४] ।।'

---

१- दर्शयिष्यामः -क,ख,ग २- 'यस्य हिमं न सौभाग्यविलोपि जातम्' इत्यधिकं गपुस्तके ३- क्वचिद्व्यंग्यप्रधाना-क ४- कवाट-ख ५- कूट-ख ६- शोणशोचिः क,ख,ग ७- वीरैर्व्यर्थलोकि-ख ८- हिमकरणच्छटा- ख-९- च इत्यधिकं गपुस्तके १०-यशसा-ख ११- च इति क-ख-गपुस्तकेषु नास्ति १२- --णोरननुरूप्य-ख १३- इत्यत्र-क,ख,ग १४- प्रतिष्ठितः-ख

किमावयोः संकेतस्थानं भविष्यतीति पृष्टमनसो[1] जनसमदाम[2]पृच्छतश्च प्रच्छन्नकामुकस्याभिप्रायमिंगितेन विदितवत्या विदग्धायाः संकेतस्थान-सूचनार्थमिदं वचनम् । अत्र पद्मपत्रस्थितबलाकाया मरकतपात्रप्रतिष्ठित-शुक्तिकासादृश्यवर्णनेन तस्यास्[3]तद्वन्निश्चलत्वप्रतीतेराश्वस्तत्वं व्यज्यते तेन तत्प्रदेशस्य निर्जनत्वं व्यज्यत इति वस्तुध्वनिः । ततश्च तदेव संकेतस्थान-मावयोरिति प्रकाशनात्[4]संलक्षित तत्सूक्ष्मार्थप्रकाशनरूपसूक्ष्मालंकारध्वनिः । एवं तदभिप्रायानु[5]रूपवर्णनात्परस्परं रतिभावो व्यज्यत[6] इति रसध्वनिश्च ।

ननु रसादिध्वनिरसंलक्ष्य[7]क्रम इति प्रसिद्धिः कथमत्र तस्यानुरणनेन व्यंग्यतोच्यते । नैवम् । यत्र विभावानु[8]भावादिवशादाशु भाविनी रसाभि-व्यक्तिस्तत्रासंलक्ष्यक्रमता । अन्यत्र तु रसादिध्वनिरपि संलक्ष्यक्रम एव । तदुक्तमभिनवगुप्तपादाचार्यैः[9]--'यद्यपि रसभावादिरर्थो ध्वन्यमान एव न वाच्यः कदाचिदपि तथापि न सर्वोऽसंलक्ष्यक्रमस्य विषयः' इति । अत एव ध्वनिकारोऽपि --

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ।।'

इत्यत्र लज्जाख्यं[10] संचारिभावमनुरणनव्यंग्यमुदाजहार ।

अथोपमाव्यंग्यप्रसंगादुपमाध्वनयः प्रदर्श्यन्ते । तत्र शब्दशक्तिमू-लोपमाध्वनिर्यथा--

'किरति प्रकरं गवां प्रकामं सुमनः स्वच्छतरं निधौ कलानाम् ।
कतिचित्कलयन्ति यत्प्रबोधं कतिचिन्नेति स तत्स्वभाव एव ।।'

एकस्माद्गुरोर्विद्यां[11] शिक्षमाणानां केचित्प्रगल्भन्ते नान्य इति विशेषो बोधकस्य गुरोस्तेषु तेषु बोधनविशेषकृतो न भवति किं तु तत्स्वभावकृत इत्यस्मिन्नर्थे प्रकृतेऽप्रकृतार्थस्योपमानत्वकल्पनया[12]त्रैवमुपमा[13] व्यज्यते। यथा चन्द्रे किरणानां प्रकरमविशेषेण सर्वपुष्पेषु[14] विकिरति[15] कानिचिद्विकसन्ति नान्यानीत्येष विशेषस्तत्तत्पुष्पस्वभावकृत एव न तु चन्द्रस्य किरणवि-

---

१- पृष्टमत्युन्मनसो-क २- इति इत्यधिकं कपुस्तके ३- स्तस्यास्त--क, तस्तद्-ख ४- ससंलक्षित (?) ख- ५- अभिप्रायानुसेधवर्णनात्-ख ६- अभिव्यज्यते-क ७-- क्रमव्यंग्य-क,ख,ग ८- विभावाभावादि--घ ९- पाद इति क-ख-गपुस्तकेषु नास्ति १०- गूढजाख्यं- ख- ११- विधाशिक्ष ख-१२- कल्पनायात्रैवमुपमानाव्यते (?) -ख १३- उपमानत्वं -क,ग १४- सर्वपुष्पेषु इति गपुस्तके नास्ति १५- किरति-क,ग

शेषाकृत[1]: स्वं गुरौ सर्वशिष्येष्वविशेषेण वाङ्मयं विकिरति[2] तेषु बोधाबोधविशेषोऽपि तत्तत्स्वभावकृत स्वेत्यत्र श्लिष्टानां गोसुमनःकलानिधिशब्दानां वागादिपर्यायपरिवृत्त्यसहिष्णुत्वा[3]च्छब्दशक्तिमूलानुरणनरूपध्वनिः ।

अर्थशक्तिमूलो वस्तुनोपमाध्वनिर्यथा--

'वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश ।
त्वयि मे गात्रसंस्पर्श[4]श्चन्द्रे दृष्टिसमागमः ।।'

अत्रार्थशक्त्या चन्द्रे दृष्टिसमागम इत्यनेन चन्द्रे सीतामुखसादृश्यं व्यज्यते । अलंकारेणोपमाध्वनिर्यथा--

'यैर्दृष्टोऽसि तदा[5] ललाटपतितप्रासप्रहारो युधि
स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान्दारयन्[6] ।
येषां[7] दुःसहकामदेहदहनप्रोद्भूतनेत्रानल-
ज्वालालीमरभासुरे पुररिपावस्तं गतं कौतुकम् ।।'

अत्रा[8]न्यत्कार्यं प्रकुर्वतोऽशक्यान्यवस्तुकरणा[9]त्मको विशेषालंकारः । उक्तरूपं त्वां पश्यतो यथोक्तविशेषणविशिष्टपुररिपुदर्शनमासीदिति निबन्धनात्कारणस्य क्रियासामान्यात्मनो दर्शनेऽपि सद्भावाद्यद्यप्ययमर्थो न वाच्यस्तथापि तस्मिन्कौतुकास्तमयवर्णनाद्गम्यः । तेन तदा त्वं तथाभूतः पुररिपु[10]रिव स्थितोऽसीत्युपमा व्यज्यते । स्वमुपमादिरुदाहृता ।

अथोपमादोषाश्चिन्त्यन्ते--न्यूनत्वमधिकत्वं लिंगभेदो वचनभेदोऽसादृश्यमसंभव इत्यस्याः षड् दोषानाहुः । तत्रोपमेयादुपमानस्यापकृष्टत्वं न्यूनत्वम् । उत्कृष्टत्वमाधिक्यम् । द्वयमपि जात्या प्रमाणेन धर्मतो वेति प्रत्येकं त्रिविधम् । तत्र जातिप्रमाणगतन्यूनत्वाधिक्ये यथा--

'चण्डालैरिव युष्माभिः साहसं परमं कृतम् ।'
'वह्निस्फुलिंग इव भानुरयं चकास्ति ।'
'अयं पद्मासनासीन[11]श्चक्रवाको विराजते ।
युगादौ भगवान्वेधा विनिर्मित्सुरिव प्रजाः ।।'

---

१- किरणविकरणविशेष--क, किरणविविकरण--ग २- विकरति-क
३- परिवृत्तिसहिष्णुत्वात्-ख- ४- प्रातसंस्पर्शः-ख ५- तथा-क-६- दारयत्-ख
७- तेषां-क ८- अत्रासत्-ख-९- वस्तुकरणको-ग १०- पुरःरिपुव-क-११-
पद्मसमासीन -ख

"पातालमिव नाभिस्ते पर्वताविव च स्तनौ ।
वेणिदण्डः पुनरयं कालिन्दीपातसंनिभः ।।"

अत्र चण्डालादिभिरूपमानैः प्रस्तुतोऽर्थोऽत्यन्तमेव कदर्थित इत्यनुचितार्थतायामिमे न्यूनत्वाधिक्ये पर्यवस्यतः । धर्मतो न्यूनत्वाधिक्ये तु हीनाधिकपदत्वरूपौ दोषौ । यथा--

"स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपट्टं[१]वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ।।"

"स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ।।"

अत्राद्य उपमानस्य मौञ्ज[२]प्रतिबिम्बस्तडिल्लक्षणधर्मो न निबद्ध इति न्यूनत्वम् । द्वितीये उपमेयस्य शंखादेरनिर्देशेन शशिनो[३] ग्रहणमतिरिच्यत इत्याधिक्यम् । लिंगवचनभेदो[४] यथा--

"भाग्याभावात्करस्थोऽपि चिन्तारत्नमिव च्युतः ।
सक्तवो भक्षिता देव[५] शुद्धाः कुलवधूरिव ।।"

इमौ प्रक्रमभंगान्तर्भूतौ । कथं च्युतत्वादिरत्र साधारणधर्मो भवितुं नार्हति । उपमानोपमेययोर्मध्ये यत्र लिंगवचनसारूप्यं तत्रैवास्य समन्वयेनोभयान्वयाभावात् । तथा चोपात्तविशेषणविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा भवेत् । प्रतीयमानेन तु धर्मान्तरेणोपमा[६] निर्वाह्या स्यात् । ततश्चोपमानोपमेययोः कस्यचित्सविशेषणत्व[७]मन्यस्य नेत्येवं[८] विशेषणप्रक्रमभंगरूपता ।

केचित्तु कालपुरुषलोडर्थादिभेदमपि दोषमाहुः । यथा--[९]

"तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ।।"

अत्र समुद्रनेमिमत्यजमित्यन्वेति न तु त्यक्ष्यामीति । पुरुषभेदो यथा--

"शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ।।"

नीवारे आभातीत्यन्वेति न त्वाभासीति ।

---

१- पदं -ख २- मौञ्जीप्रति-- क,ख,ग ३- शशिग्रहणम्-क ४- भेदौ-क ५- देवि ख ६-- नोपमा निर्वाह्या -घ - ७- विशेषण-- ग-८- नेत्यर्थविशेषण--क,ख,ग ९- तथा- ख

विध्यादिभेदो यथा--

"आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।

पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं[1] भवतः पितेव ।।"

भवन्तमलभतेत्यन्वेति न तु लभस्वेत्याशीः[2] । असादृश्यासंभवावुपमाया-[3 मा]

मनुचितार्थतायां पर्यवस्यतः । असादृश्यं[4] यथा---

"गृह्णामि[5] काव्यशशिनं विततार्थरश्मिम् ।"

काव्यस्य शशिना सादृश्यमप्रसिद्धम् । यद्यर्थानां रश्मीनां च सादृश्यं

प्रसिद्धं[6] स्यात्तदा तदीयबिम्बप्रतिबिम्बभावेन काव्यशशिनोः सादृश्यमप्र-

सिद्धमप्यानीयेत न च तदप्यस्ति । यथा वा--

"एष विन्ध्याचलः सान्द्रकुंजोल्लसितनिर्झरः[7] ।

भालेक्षणस्फुरद्वह्निशिखाटोप इवेश्वरः ।।

असंभवो यथा --

निपेतुरास्यादिव[8] तस्य दीप्ताः शरा[9] धनुर्मण्डलमध्यभाजः ।

जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ।

ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो[10] न संभवन्तीत्यसंभवः ।

केचिदुपमानाप्रसिद्धिं[11] पृथग्दोषमाहुः । यथा--

बाष्पदिग्धेक्षणं[12] वक्त्रं तरुण्याः परिदृश्यते ।

तुषारसिक्तच्छदनं तरंगिण्या इवोत्पलम् ।।"

अत्र बाष्पदिग्धेक्षणं तुषारसिक्तच्छदनमित्यनयोर्बिम्बप्रतिबिम्बभावेन

सादृश्यसंभवेऽप्युत्पलस्य मुखं प्रत्युपमानत्वाप्रसिद्धिरेव दोषः ।

अथैषां दोषाणां यथासंभवमपवादाः प्रदर्श्यन्ते - कविसमयसंमतेषु[ग][13]

जात्या प्रमाणेन च न्यूनत्वाधिक्ये न दोषौ । यथा--

"तवाननसमश्चन्द्रश्चन्द्रतुल्यं त्वदाननम् ।

श्वणकं मध्यसदृशं मध्यं श्वणकसंनिभम् ।।"

---

१- मीड्यो-ग २- आशी-क ३- अत्र सादृश्यसंभवादुपमाया अनु--ख, (३)- अत्र सादृश्यसंभवादुपमाया--ग ४- असादृश्य ख- ५- गृह्णामि-ख- ६- प्रसिद्धम् इत्यारभ्य सान्द्र इत्यन्तं ख पुस्तके नास्ति ७- कुंजोच्चलित-क,ख,ग ८- निष्पेतुः-ख-९- शरा-क,ख,ग१०- निष्पतत्यो-क ११- प्रसिद्धं-ख १२- वाष्पादिग्धे--ख १३- --समतेषु-क

अत्र कविसमयप्रसिद्धेर्न किंचिदनौचित्यम् । उपमेयोपमानगताधिक-धर्मोपादानस्यैकैकधर्मकानेकोपमार्थत्वेन वा साधारणधर्मवत्तासंपादनार्थत्वेन वा धर्मिस्वरूपविशेषलाभार्थत्वेन वा विधानान्तरेण[१] वा प्रस्तुतकार्यान्तरार्थत्वे[२] धर्मतो न्यूनत्वाधिक्ये[३] न दोषौ । यथा--

'क्षीरोदवेलेव सफेनपुंजा पर्याप्तचन्द्रेव[४] शरत्त्रियामा ।
नवं[५] नवं धामनिवासिनी सा भूयो बभौ दर्पणमादधाना ।।'

इत्यत्रोपमेयगताधिकविशेषणोपादानस्यैकैकविशेषणकानेकोपमानार्थत्वात् ।

'क्षीरोदवेला च सफेनपुंजा पर्याप्तचन्द्रा च शरत्त्रियामा ।
अनुव्यधात्धामनिवासिनीं तामच्छप्रभं दर्पणमादधानाम् ।।'

इत्यस्यैव श्लोकस्य पाठे[६] उपमानगतानेकधर्मोपादानमेकैकधर्मकोपमानु-[७]यार्थमित्युपमानस्य धर्मतं आधिक्यान्न[८] दोषः ।

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ।।

अत्र विज्ञापितविशेषणं ध्यानस्तिमितलोचन इति साधारणधर्मवत्तासं-पादनार्थमिति न्यूनत्वं न दोषः ।

ज्यानिनादमभिगृह्णती तयोः प्रादुरास बहुलक्षपाछविः ।
ताडका[९] चलकपालकुण्डला[१०] कालिकेव निबिडा बलाकिनी ।।

अत्र निबिडेति विशेषणं कालिकाया बहुलक्षपाछविरिति साधारण-धर्मवत्तासंपादनार्थमित्याधिक्यं न दोषः ।

'अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ।।'

अत्रातिथिं[११] नामेति विशेषणं धर्मिस्वरूपविशेषलाभार्थमिति[१२] न्यूनत्वं[१३] न दोषः ।

'रसान्तराण्येकरसं[१४] यथा दिव्यं पयोऽश्नुते ।
देशे[१५] देशे गुणेष्वेवमवस्थास्त्वमविक्रियः[१६] ।।'

---

१- विधान्तरेण-क,ख,घ, विधान्तरार्थत्वेन-ग २- प्रस्तुतकालान्तरा--ख
३- न्यूनत्वाधिको-ख ४- पर्याप्तचन्द्रेव-ख ५- नवम् इत्यारभ्य अनुव्यधात् इत्यन्तं खपुस्तके नास्ति ६- पाठो (?) क ७- उपमासत्तुगता--ख ८- आधिक्यं न दोषः-क,ख,ग, ९- ताटका-क,--तारका-ख १०--कुण्डलो-ख ११-अत्रातिथिनाम-ख
१२- स्वरग-क,ग १३- आधिक्यं-घ १४- -ण्येकरस-ख १५- काले-ख १६-मवस्था त्वमिविक्रियः-ग

अत्र दिव्यमिति विशेषणं धर्मिविशेषलाभार्थमित्यधिकत्वं न दोषः। एवं प्रकृतकथासंघटनचमत्कारादिकार्यान्तरत्वेऽपि[1] द्रष्टव्यम्[2]। एवं च प्रस्तुतकार्यान्तरोपयोगरहितानां बिम्बप्रतिबिम्बभावेऽपि[3] [4] साधारणधर्मैकप्रयोजनतया[5] संभाव्यमानानामुपमेयोपमानविशेषणानां प्रतिविशेषणा*निर्देश एव न्यूनत्वमधिकत्वं च दोषः।

कार्यान्तरार्थानामप्यनुगामिनामतया[6] विशेषणनिर्देशेन वा साधारणीकरणे त्वधिको गुणः। यथा--"ज्यानिनादमभिगृह्णती-" इति श्लोके ज्यानिनादमभिगृह्णतीत्युपमेयविशेषणं ताड़का[7] स्वयमेव जिघांसया प्रादुर्भूय प्रथममभिद्रुतवती रामेण हतेति स्त्रीवधानौचित्यपरिहारार्थत्वेऽप्युपमानसाधारणम्। कालिकायामपि गर्जितशालिन्यामतिशयोक्त्या तद्विशेषणानुवृत्तेः। तथा --"नृपं तमावर्त -[8]" इति श्लोके "अन्यवधूर्भवित्री" इत्यस्य व्यतिक्रमणार्थत्वेऽपि सागरगामिनीति तत्प्रतिविशेषणनिर्देशः कृतः।

यत्र लिंगवचनभेदेऽपि सामान्याभिधायिपदं स्वरूपभेदं नापद्यते तत्र न दोषः उभयानुगतिक्षमत्वात्[9]। यथा--"भीमकान्तैर्नृपगुणैः"।

तद्देशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः[10]।
दधते स्म परां शोभां तदीया विभ्रमा इव॥"

सामान्याभिधायिपदस्य स्वरूपभेदापत्तावपि लिंगवचनभेदो महाकविप्रयोगेषु दृश्यते।

"द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम्।
त्याज्यो दुष्टः प्रियोऽप्यासीदंगुलीवोरगक्षता॥"
"प्रवृद्धो हीयते चन्द्रः समुद्रोऽपि तथाविधः।
स तु तत्समवृद्धिश्च न चाभूताविव[11] दायी॥"

इत्यादौ। कालादिभेदे तु भूयांस्युदाहरणानि। एतादृशेषु[12] लोकसिद्धत्वाल्लिंगादिभेदो न दोषः" इति वामनः। एवं गुणदोषव्यवस्थायां सहृदयहृदयमेव प्रमाणम्। उक्तं हि दण्डिना --

---

१- "तत्र तत्र" इत्यधिकं क-ख-ग पुस्तकेषु २- द्रष्टव्यम् इत्यारभ्य उपमान"
(४ र्थ प०) इत्यन्तं खपुस्तके नास्ति ३- भावेन-क,ग-४- न इति ख-घयोः अधिकम्।
५- -- धर्मतयैक-क-६- नाम इति गपुस्तके नास्ति ७- ताटका-क,ख
८- गभीरनाभिः इत्यधिकं गपुस्तके ९- तयत्वात्-क १०- तावृत--ख ११- चाभूताविव-ख
१२- उपमासु इत्याधिकं कपुस्तके
* प्रतिविशेषणानिर्देशा- घ

'न लिंगवचने भिन्ने न हीनाधिकते[1] अपि ।
उपमादूषणायालं[2] यत्रोद्वेगो न धीमताम् ।।
स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियोऽयं मे विधा[3] धनमिवार्जिता ।।
भवानिव महीपाल देवराजो विराजते ।
अलमंशुमत: कक्षामारोढुं तेजसा नृप: ।।
इत्येवमादि सौभाग्यं न जहात्येव जातुचित् ।
अस्ति च कश्चिदुद्वेग: प्रयोगे वाग्विदां यथा ।।
हंसीव धवलश्चन्द्र: सरांसीवामलं[4] नभ: ।
भर्तृभक्तो भट: श्वेव खद्योतो भाति भानुवत् ।।
ईदृशं वर्ज्यते सद्भि: कारणं तत्र चिन्त्यताम् ।' इति ।

कविसमयप्रसिद्धौ सत्यामसादृश्यं न दोष: यथा--'चन्द्रधवला कीर्ति:' इत्यादौ । उपमेयगतासंभावितत्वविवक्षायामुपमानस्यासंभवो[5] न दोषाय[6] । यथा--'चन्द्रबिम्बादिव विषम्' इत्यादौ । श्लिष्टसाधारणधर्मायामन्यत्रापि सहृदयहृदयाह्लादिन्यां कल्पितोपमानायामुपमायामप्रसिद्धत्वं[7] न दोष: । यथा--

'कविमतिरिव बहुलोहा सुघटितचक्रा[8] प्रभातवेलेव[9] ।
हरमूर्तिरिव हसन्ती भाति विधूमानलोपेता ।।'

'सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारंगकम्' इत्यादौ । एवमन्येऽपि दोषापवादप्रकारा विद्वद्भिश्चिन्तनीया: ।।

इति चित्रमीमांसायामुपमाप्रकरणम् ।

---

अथोपमेयोपमा निरूप्यते--

उपमानोपमेयत्वं द्वयो: पर्यायतो यदि ।
उपमेयोपमा सा स्याद्[6]द्विविधैषा प्रकीर्तिता ।।

यदि द्वयोर्वर्ण्यते सोपमेयोपमेत्युच्यते तदा तुल्ययोगितायामतिव्याप्ति: । तत्र ----

---

१- हीन इति खपुस्तके नास्ति २-- दूषणायात्-ख ३- विद्या धनमिवा-- घ-४- सरांसीवामलं-ख ५- अभावो-क-६- दोष:-ख-७- कल्पितायामुपमायामप्रसिद्धत्वं क,ख-८- सुघटितचन्द्रा-ख९- प्रभातवलेव-ख

'जनस्य तस्मिन्समये विगाढे बभूवतुर्द्वौ सविशेषकान्तौ ।

तापापनोदक्षमपादसेवौ स चोदयस्थौ नृपतिः शशी च ।।'

इति द्वयोर्नृपशशिनोर्युगपदेकधर्मान्वय[१]वर्णनात् । अतः पर्यायेणेत्युक्तम् ।

तथापि--

'तस्य द्विपानां मदवारि[२]सेकात्खुराभिघाताच्च तुरंगमाणाम् ।

रेणुः प्रपेदे पथि पंकभावं पंकोऽपि रेणुत्वमियाय भूयः ।।'

इत्यत्रातिव्याप्तिः । तत्र रेणुपंकयोः पर्यायेण पंकरेणुभाववर्णनात् । अत उपमानोपमेयत्वमित्युक्तम् । द्वयोर्यदुपमानोपमेयत्वं वर्ण्यते सोपमेयोपमेत्युक्तेऽपि- 'व्युष्टं[३] प्रयाणं[४] च वियोगवेदनाविदूननारीकमभूत्समं[५] तदा' इत्युभयविश्रान्तसादृश्यायामु[६]पमायामतिव्याप्तिः । न च तत्रोभयोरपि सादृश्याश्रयत्वरूपस्योपमेयत्वस्यैव प्रतिपादनमस्ति न सादृश्यप्रतियोगित्वरूप[७]स्योपमानत्वस्यातो नातिव्याप्तिरिति वाच्यम् । मुखतः प्रतिपादनाभावेऽपि तयोः परस्परमुपमानत्व[८]स्यार्थात्प्रतीतेः । न ह्युपमानोपमेयत्वं यत्र[९] वाच्यमिति लक्षणे विवक्षितम् । व्यंग्योपमेयोपमासंग्रहाभावप्रसंगात् । अतः पर्यायेणेत्युक्तम् । एवमपि- 'भणितिरिव मतिर्मतिरिव चेष्टा' इत्यादि[१०]रसनोपमायां मतिचेष्टयोः पर्यायभेदेनोपमानत्वस्योपमेयत्वस्य च सत्त्वेनातिव्याप्तिपरिहारायैकस्मिन्पर्याये यं प्रत्युपमानत्वं तं प्रत्येव पर्यायान्तरे उपमेयत्वं विवक्षणीयम् ।

द्विविधे[११]त्युक्तम् । द्वैविध्यं धर्मस्य साधारण्यवस्तुप्रतिवस्तुभावाभ्याम् ।

'सुगन्धि नयनानन्दि मदिरामदपाटलम् ।

अम्भोजमिव ते वक्त्रं त्वद्वक्त्रमिव पंकजम् ।।'

'स्वच्छायाम्भोजवदनाः स्वच्छायवदनाम्बुजाः ।

वाप्योऽङ्गना इवाभान्ति[१२] यत्र वाप्य इवाङ्गनाः ।।'

इति क्रमेणोदाहरणे ।

अत्रेदं विचार्यते । लक्षणस्य[१३] त्वद्वल्गुना युगपदुन्मिषितेन तावत्' इति

---

१- धर्मान्वये इति खपुस्तके द्विरावृत्तम २- मत्वारिसेकात्-ख-३- प्रमाणं -क(?) घ ४- त्वं-क-५- समम् इति खपुस्तके नास्ति ६- सादृश्योपमायाम् -ख ७- गित्वरूपम्-ग ८- सुपमानस्यार्थात्-ग ९- तत्र-ग १०- -रशनो--क, शरोपमा (?) -ख ११- सद्विधवेत्युक्तम्-क १२- भाति-ख २३- त्वद्वल्गुना-घ.

प्रागुदाहृतायां युगपदुपमेयोपमायामव्याप्ति: । न चेयमुपमेयोपमा न भवति, किं तूभयविश्रान्तोपमामात्रमिति शंकनीयम् । परस्परतुलामित्यनेन द्वयोरपि प्रतियोगित्वस्यापि प्रतिपाद्यमानतया उपमेयोपमेत्यन्वयार्थस्याविशिष्टत्वात् । अर्थादपि सिध्यत: परस्परप्रतियोगित्वस्य मुखत: प्रतिपादनेन तृतीयसदृशव्यवच्छेदरूपफललाभाच्च । किं च 'रजोभि: स्यन्दनोद्धूतै:[१]' इति प्रागुदाहृतायां परस्परोपमायामतिव्याप्ति: । न च तत्राप्युपमेयोपमा । तृतीयसदृशव्यवच्छेदाप्रतीते: । 'द्विविधैषा प्रकीर्तिते'ति विभागासामञ्जस्य[२]प्रसंगाच्च । न ह्यत्र धर्मस्य साधारण्यं वस्तुप्रतिवस्तुभावो वास्ति । गगनस्य भूतलेन सादृश्ये रजोव्याप्तत्वं साधारणधर्म: । भूतलस्य गगनेन सादृश्ये गजानां मेघानां च बिम्बप्रतिबिम्बभाव इत्यत्यन्तविलक्षणत्वात् । अत एवात्र तृतीयसब्रह्मचारिव्यवच्छेदरूपं फलम[३]पि न सिध्यति । एकधर्माश्रयेण परस्परसाम्ये[४] वर्ण्यमाने ह्यनयोरस्मिन्विषये तृतीय: सब्रह्मचारी नास्तीति फलति । कस्यचित्केनचित्सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थसिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदार्थं भवतीति हि तत्फलकत्वे बीजम् । न चैतद्धर्मसाधारण्य इव धर्मभेदेऽपि लभ्यते । रजोभिर्गगनस्य भूतलसादृश्यवर्णनेन भूतलस्य मेघाकारैर्गजैर्गगनसादृश्यस्यार्थत: सिद्ध्यभावात् ।

अपि च--

'पितासमाराधनतत्परेण पुत्रेण[५] पुत्री स यथैव तेन ।
पुत्रस्तथैवाधिकवत्सलेन स तेन पित्रा पितृमान्बभूव ।।'

इति व्यत्यस्तधर्मिबिम्बप्रतिबिम्बकोपमायामतिव्याप्ति[६]: । अत्र हि पुत्र: पिता चेत्युभावुपमेयोपमानभूतौ धर्मिणौ । तयोस्तावेव व्यत्यासेन पितृमत्त्वं पुत्रित्वमिति साधारणधर्मकोटिप्रविष्टतयोपात्तौ[७] । तयोश्च बिम्बप्रतिबिम्बरूपसाधारण्यापादको[८] धर्मो मतुबिनिप्रत्ययोपात्तं प्राशस्त्यम् । प्रशंसायां ह्यत्र[९] तौ प्रत्ययौ पित्रा पितृमानिति संबन्धमात्रस्यावक्तव्यत्वात्[१०] । एवं च

---

१- स्यन्दनोद्भूतै: घ- २ विभागासामर्थ्य-ख- ३- फलमपि न सिध्यति-ख ४- साधर्म्ये-ग ५- सपुस्तके पुत्रेण- तेन इत्यंश: छिन्नावृत: ६- प्रतिबिम्ब इति खपुस्तके नास्ति ७- योपात्तयोश्च-ख ८- प्रतिबिम्बभावरूप-ख ९- अन्यत्र-ख १०- स्याव्यक्तत्वात्-ग

पुत्रस्य पितुश्च प्रशस्तपितृमत्त्वं प्रशस्तपुत्रवत्त्वं[1] च बिम्बप्रतिबिम्बकरम्बितेन वस्तुप्रतिवस्तुभावेन साधारणधर्म इति लभ्यते । तयोश्च पितापुत्रयोः प्राशस्त्यप्रतिपादके अधिकवत्सलेन समाराधनतत्परेणेति च विशेषणे । ततश्च धर्म्युपमायां यः पिता पुत्रस्योपमानं स एव तस्य तदुपपादके बिम्बप्रतिबिम्बनिर्देशे[2] उपमेय इति लक्षणस्य[3] वर्तनं तावत्स्पष्टम् । न चेयमुपमेयोपमा । पुत्रपित्रोर्धर्मिणोरुपमायां प्रशस्तपितृमत्त्वं प्रशस्तपुत्रवत्त्वं च वस्तुप्रतिवस्तुभावेन बिम्बप्रतिबिम्बभावकरम्बितेन साधारणो धर्मः । पितापुत्रयोस्तु धर्मकोटिनिविष्टयोर्वात्सल्यभक्त्यतिशयकृतं प्राशस्त्यमनुगतसाधारणधर्म इति पूर्वोदाहरणसारूप्यात्समुच्चयोपमया पुत्रोऽपि पितृभक्त्या प्रशस्तः पितापि पुत्रवात्सल्येन प्रशस्त इत्यर्थलाभेऽपि तृतीयसब्रह्मचारिव्यवच्छेदालाभश्च । न चात्र इवशब्दद्वयादियुक्तपर्यायद्वयाभावात्पर्यायविशेषणेनैवातिव्याप्तिनिरासः स्यादिति वाच्यम् । वाच्यकक्षायां पुत्रपित्रोरुपमा व्यंग्यकक्षायां[4] पितापुत्रयोरिति पर्यायद्वयसत्त्वात्[5] । न हि पर्यायद्वयस्यापि वाच्यत्वमत्र विवक्षितम् । येनेवशब्दद्वययुक्तपर्यायद्वयाभावादतिव्याप्तिर्निरस्येत । तथा सति हि व्यंग्योपमेयोपमासाधारण्यं न स्यादित्युक्तम् । न चात्र धर्मिणोरेवोपमा धर्मयोस्तु उपमानोपमेयसाधारण्यार्थमभेद[6] एव प्रतीयते नोपमेति वाच्यम् -

नलिन्या इव तन्वंग्यास्तस्याः पद्ममिवाननम् ।
मया मधुकरेणेव पायं पायमतृप्यत ।।

इत्यादौ बिम्बप्रतिबिम्बभावापन्नयोस्तन्वीनलिन्यादिकयोरुपमाया अपि दर्शनेन धर्मयोः सादृश्येन साधारणीकरणस्याप्युपमाप्रयोजकत्वात् । तस्मात्तत्रातिव्याप्तिशंका दुर्वारा । अतोऽनुपपन्नमेवेदं[7] लक्षणं लक्ष्यते । अत्र ब्रूमः --

अन्योन्येनोपमा बोध्या व्यक्त्या वृत्त्यन्तरेण वा ।
एकधर्माश्रया या स्यात्सोपमेयोपमा मता ।।

अन्योन्येति[8] विशेषणान्न रशनोपमायामतिव्याप्तिः । व्यक्त्या वृत्त्य-

---

१- प्रशस्तपुत्रवत्त्वम्, इति सपुस्तके नास्ति २- बिम्बनिर्देशे-ख ३- लक्षणवर्तनं-क
४- पुत्रपित्रोरुपमा व्यंग्यकक्षायां इति सपुस्तके नास्ति ५- --शब्दद्वययुक्तद्वयाभावादतिव्याप्तिः -क, --शब्दादिद्वयाभावा--ख ६- उपमनोप--ख, ७---मिवेदं ख-
८- विशेषणात् । नाशनोपमाया-ख

न्तरेण वा बोध्येति विशेषणाच्च नोभयविश्रान्तसादृश्योपमायामतिव्याप्तिः । परस्परप्रति[1]दी[2]पकविकल्पार्थेन वाकारेण हि या परस्परप्रतियोगिकत्वविशिष्टोपमा तद्विषयवृत्त्यन्तरनिरपेक्ष[3]व्यक्तिबोध्या तद्विषयव्यक्तिनिरपेक्षवृत्त्यन्तरबोध्या वा भवति सोपमेयोपमेति पर्यवस्यति । ततश्[4]चोभयविश्रान्तसादृश्योपमायामन्योन्यप्रतियोगिकत्वांशे व्यक्तिः सादृश्यरूपोपमांशे वृत्त्यन्तरमिति तयोः कदम्बितत्वान्नातिव्याप्तिशंका । सामान्यलक्षणसिद्[5]ध्यर्थं च व्यक्तिवृत्त्यन्तरयोरन्योन्यत्वेन क्रोडीकृतयोर्ग्रहणम् । एवं हि तया गृहीतं "तु मृगांगनाभ्यः" इत्यत्र वृत्त्यन्तरापेक्ष[5]व्यक्तिबोध्यायामनलंकारभूतायां व्यक्तिनिरपेक्षवृत्त्यन्तरबोध्यायामलंकारभूतायां चोपमा[6]यां लक्षणमनुगतं भवति । यद्यपि व्यंग्यायामप्युपमेयोपमायां शब्दस्य सहकारित्वेन तद्गतशक्तेरप्यपेक्षितत्वात् "खमिव जलं जलमिव खम्" इत्यादौ वाच्यायामपि गम्यसाधारणधर्मायां तस्या[7]ं धर्मांशे व्यक्तेरपेक्षितत्वात्परस्परनैरपेक्ष्यमसं[8]भवि, तथाप्यन्योन्यप्रतियोगिकत्वविशिष्टसादृश्यविषयवृत्त्यन्तरनिरपेक्ष[9]त्वं व्यक्तेः तद्विषयव्यक्तिनिरपेक्षत्वं वृत्त्यन्तरस्य चास्त्येव । इदमेव च व्यक्तिपदानपेक्षयालंकाररूपाया विशेषलक्षणमपि । तत्र व्यक्तिपदपरित्यागे वृत्त्यन्तरमात्रबोध्येत्येतद्विशेषणं पर्यवस्यति । ततश्चोभयविश्रान्तसादृश्योपमाव्यावृत्तिः । न च तस्यामेकस्यैवोपमानत्वं न तु द्वयोरित्यन्योन्यपदेनैव व्यावृत्ताविदं व्यर्थमिति वाच्यम् । प्राकरणि[10]काप्राकरणिकयोः सादृ[11]श्यवर्णने प्राकरणिकस्यैवोपमानत्वलाभेऽप्युभयोरपि प्राकरणिकत्वे विनिगमनाविरहेण परस्परोपमानत्वप्रतीतेः । एवं धर्मा[12]श्रयविशेषणात् "रजोभिः स्यन्दनोत्कीर्णैः" इ[13]ति परस्परोपमायां नातिव्याप्तिः । उक्तविशेषणबलादेव "पिता

[illegible]

समाराधनतत्परेण" इत्युपमायामपि नातिव्याप्तिः । उभयत्राप्युपमेययोर्भिन्न[14]धर्माश्रयत्वात् । एकधर्माश्रयेत्यस्य चायमर्थः । कस्यचिद्[d]येनोपमायां यो धर्मः साधारणो वस्तुप्रतिवस्तुभावापन्नो वा स एवान्यस्य तेनोपमायामपीति । न त्वनुगामिधर्माश्रयेत्यर्थः । बिम्बप्रतिबिम्बगर्भवस्तुप्रतिवस्तुभावनिर्देशे[15] तदभावादिति दिक् ।

इदं तूपमेयोपमात्वप्रयोजकं[16] लक्षणम् । अनुगतानतिप्रसक्तलक्षणं तु[17]-

---

१- "तत्र" इत्यधिकं गपुस्तके २- परस्परद्योपक --ख ३- वृत्त्यन्तरपेक्ष्य-ख ४- ततश्च इत्यारभ्य पर्यवस्यति (१६ प०) इत्यन्तं खपुस्तके नास्ति ५- वृत्त्यन्तरनिरपेक्ष--क ६- चोपमेयोपमायां-क ७- तस्या क--८- असंभवति -क- ९- निरपेक्षत्वं-क १०- प्राकरणिकः प्राकरणिकयोः--ख ११- तादृश्य--ख १२- एकधर्माश्रयविशेष---क १३- इत्यत्र-क १४- -प्युपमेयोर्भि--ख १५- निर्देश-ख १६- प्रयोजकलक्षणं -ख १७- लक्षणमात्रं तु-क,ख,ग

'सदृशस्य तृतीयस्य व्यवच्छेदाय यद्[1]भवेत् ।
अन्योन्येनोपमेयत्वं[2] सोपमेयोपमा मता ।।'

इति द्रष्टव्यम् । अत्रान्योन्येनेति विशेषणं 'अहेमव गृहः सुदारूणानाम्' इति प्रतीपविशेषव्यावृत्त्यर्थम् ।

अथोदाहरणानि । तत्र धर्मस्य साधारण्ये[3] यथा--

'खमिव जलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ।।'

इयं प्रतीयमानसाधारणधर्मा । वाच्यसाधारणधर्मा यथा---'सुगन्धि नयनानन्दि' इत्यादि ।

यथा वा--

'गिरिरिव गजराजोऽयं गजराज इवोच्चकैर्विभाति गिरिः ।
निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति ।।'

अत्रोपमेयोपमाद्वयस्य परस्परानुगृहीतत्वेन विच्छित्तिविशेषोऽधिकः ।
वस्तुप्रतिवस्तुभावो[4] यथा--'सच्छायाम्भोजवदना' इत्यादि ।
इदं वस्तुप्रतिवस्तुभावस्य बिम्बप्रतिबिम्बविशेषणत्वे उदाहरणम् । तद्विशेष्यत्वे यथा--

'वक्त्रं पद्ममिवैतस्या नेत्रं[5] भृंगमनोहरम् ।
पद्मं वक्त्रमिवाभाति भृंगलोचनभूषितम्[6] ।।'

एतानि पर्यायोपमेयोपमोदाहरणानि । युगपदुपमेयोपमोदाहरणं तु-तद्वल्गुना युगपदुन्मिषितेन[7] इत्यादि ।

तत्रापि यथासंभवं पूर्वोक्ता भेदा[8] उन्नेयाः ।।

इत्युपमेयोपमाप्रकरणम्[9] ।

---

अथानन्वयः --

एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः ।

एवकारबलादेकस्यामेवोपमिति[10]क्रियायामिति गम्यते । तेनोपमेयोपमायां रसनोपमायां च नातिव्याप्तिः । उदाहरणम्--गगनं गगनाकारं

---

१- यद्द्वयोः-क,ख, २- उपमानोपमेयत्व-ख ३- साधारण्ये इत्यारभ्य प्रतीयमान इत्यन्तं ख पुस्तके नास्ति ४- भावे-क ५- नेत्र-क,ख ६- भृंगलोचन-ख ७- युगपदुन्मिषितेन इति खपुस्तके नास्ति ८- पूर्वोक्तभेदा यथासंभवमुन्नेयाः क ९- चित्रमीमांसायाम् इत्यधिकं गपुस्तके १०- वोपमिति ख

सागर: सागरोपम:[1] । अयं प्रतीयमानधर्म: । निर्दिष्टधर्मो यथा--

'न केवलं भाति[2] नितान्तकान्तिर्नितम्बिनी[3] सैव नितम्बिनीव ।
यावद्विलासायुधलास्यवासास्ते[4][5] तद्विलासा इव तद्विलासा: ।।

ननु--

'पितुर्नियोगाद्वनवासमेवं[6] निस्तीर्य राम: प्रतिपन्नराज्य: ।
धर्मार्थकामेषु समां[7] प्रपेदे यथा तथैवावरजेषु वृत्तिम् ।।'

इत्यत्रैकस्यैव रघुपतेरुपमानत्वमुपमेयत्वं[8] च । न च तत्रानन्वय: । समुच्चयोपमया तस्य धर्मार्थकामेष्वनुजेषु च समवृत्तिमात्रस्यैव प्रतिपाद्यतया सदृशान्तरव्यवच्छेदे तात्पर्याभावात् । तथा त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव' इत्यत्राप्यस्ति स्वस्यैवोपमानत्वमुपमेयत्वं च । तत्रापि नानन्वय: ।[9] पितृनियोगात्क्षि[10]तित्याग इवापवादा[11]त्सीतात्यागे[12] च सदृशान्तरप्रसक्त्यभावेन तद्व्यवच्छेदस्य फलत्वायोगाच्च । एवम्--

'उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा[13] नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ।।'

इत्यादावप्येकस्यैवोपमानोपमेयभाव: स्पष्ट: । न चैतेषु क्वचिद्धर्मादिषु वृत्तेरवरजेषु वृत्तेश्चोपमानोपमेयभाव: । अन्यत्र क्षितित्यागस्य सीतात्यागस्य चापरत्र गंगापतनस्य दुकूलसंनिधानस्य च । न तु क्वचिदप्येकस्यैव धर्मिण उपमानोपमेयभाव: । विशिष्टान्वयिनो[14]ऽपि विशेष्यबाधे[15] विशेषणसंक्रमौचित्यादिति वाच्यम् । यथा धर्मार्थकामेषु समवृत्तिं[16] प्रपेदे तथावरजेष्वित्यादिप्रकारे[17]णैकस्यैवोपमानोपमेयभावे निबद्धेऽपि तस्य विशेषणसंक्रान्ति[18]कल्पने 'पाण्ड्योऽयमंसार्पितलम्बहार:' इत्यादीनामपि[19] हारनिर्झरादीनामेवोपमानोपमेयभाव: स्यादिति बिम्बप्रतिबिम्बोदाहरणमात्रविलोपप्रसंगात् । 'रामरावणयोर्युद्धम्' इत्यादावभेदेऽप्युपमानोपमेयभावमभ्युपगच्छतामालंकारिकाणां विशेष्यबाधस्यापरिहरणीयत्वाच्च । तस्मादत्र सविशेषणे हि' इति न्यायोपन्यासो वाक्यमीमांसकानां शोभते नालं-

---

१- सागर: सागरोपम: इति क-ख-गपुस्तकेषु नास्ति २-ताति-ख, भाति-ग ३- नितान्तकान्ति-ख ४- लावद्विला-ख ५---युवलासवासा-क,ख ६- --मेवं-ख ७- समं-ख ८- इत्यत्रास्त्येव-ख ९- अथ पितृनियोगात् क्षितित्याग इवापवादात् सीतात्यागे न प्रतिषेद्धव्योऽहमित्येतावित्येव तात्पर्येण सदृशान्तरव्यवच्छेदे तात्पर्यात् इत्यधिक क-पुस्तके, ख-पुस्तके तु पितृनियोगात् क्षितित्याग इवापवादात् सीतात्यागे न प्रतिषेध इत्याहमित्थं-- तात्पर्यात् इत्यधिकम् १०-राज्यत्यागे-क,ख ११-इव इति क-खयो: नास्ति १२- अपवादभयात्-क,ख १३-त्वष्ट्रा इत्यारभ्य उत्तमाङ्गे इत्यन्तं क-खयो: नास्ति १४-विशिष्टान्वयिनोपमेयभावे निबद्धेऽपि तस्य विशेषण--ख १५- विशिष्यबाधे-क १६-समावृत्तिं-क १७- अपि इत्यधिकं खपुस्तके १८-विशेषणोपसंक्रान्ति-क १९-इत्यादावपि-क,ख,ग

कारमीमांसकानाम् । वाक्यमीमांसका ह्यभेदे उपमानोपमेयभावनिर्देश एव नास्तीति मन्यमाना 'रामरावणयोर्युद्धं' इत्यादावद्यतनस्य पूर्वेद्युस्तनं युद्ध-मुपमानम् । एतत्कल्पगगनस्य कल्पान्तरगगनमुपमानमित्यादि कल्पयन्ति । तस्मादालंकारिकमते एतेष्वेकस्यैवोपमानोपमेयभाव इति लक्षणमतिव्याप्त-मिति चेत् ।

अत्र ब्रूमः--

'स्वस्य स्वेनोपमा या स्यादनुगाम्येकधर्मिका[1] ।

अन्वर्थनामधेयोऽयमनन्वय इतीरितः ।।'

स्वस्य स्वेनेति विशेषणादुपमेयोपमायां रसनोपमायां[2] च नातिव्याप्तिः । अनुगाम्येकधर्मिकेति[3] विशेषणादुदाहृतोपमाविशेषेषु[4] नातिव्याप्तिः यद्यपि तेष्वपि समां[5] वृत्तिं प्रपेदे इत्याद्यशेऽनुगामिधर्मप्रवेशः[6] तथाप्येको न भवति । धर्मार्थकामावरजादि[7]बिम्बप्रतिबिम्बभावकरम्बितत्वात् । अत एवैकग्रहणमप्यर्थवत् । अन्वर्थनामधेय इति तु[8] न लक्षणान्तर्गतम् । किं तु स्वेन स्वस्योपमाप्यनुगाम्येकधर्मा चेदेवानन्वयो नान्यथेत्यत्रोपपत्तिमात्रपरम् । धर्म्यैक्ये हि स्वस्य स्वेनोपमा नान्वेतीत्यनन्वय इत्यन्वर्थं नाम भवति । अनन्वयपर्यनिबन्धनवशाच्चानुपमत्वद्योतनफलपर्यन्तं धावेत्[9] । धर्मभेदे तु एकधर्मावच्छिन्नेन स्वेनैव धर्मान्तरावच्छिन्नस्य[10] स्वस्योपमान्वेतीति न तत्रान्वर्थं नाम, न वानन्वयपर्यनिबन्धनाधीनानुपमत्वफललाभः । इदमनन्वयत्वप्रयोजकं लक्षणम् । लक्षणमात्रं तु 'यत्र तेनैव तस्य स्यात्[11]' इति भामहोक्तमनुसंधेयम् । 'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्यतिशयोक्तिविशेषेऽनुपमत्वद्योतनफलसाम्यकल्पनावत्यतिव्याप्तिनिरासाय तेनैव तस्येति विशेषणम् ।

अयमनन्वयो व्यंग्योऽप्यस्ति । यथा--

'अद्य या मम गोविन्द जाता त्वयि गृहागते ।

कालेनैषा भवेत्प्रीतिस्तवैवागमनात्पुनः ।।'

अत्र गृहागतं श्रीकृष्णं प्रति विदुरवाक्ये इयं त्वदागमनप्रभवा प्रीतिर्बहुकालव्यवहितेन पुनरपि त्वदागमनेनैव भवेत् नान्येनेत्युक्तिभंग्या त्व-

---

१- एकधर्मतः क,ख २- रशनोपमायां--ख ३- अनुगाम्येकधर्मेत इति--क
४- पमाविशेषु--क ५- सम--ख ६- प्रवेशः इति क-खयोः पुस्तकेषु नास्ति
७- धर्मार्थकाम--ख ८- तु इति कपुस्तके नास्ति ९- तात्पर्ययम् इत्यधिकं क-गयोः
१०- धर्मान्तरावच्छिन्नस्य इत्यतः तेनैव (२१ प०) इत्यन्तं खपुस्तके नास्ति
११-समग्रा कारिका -यत्र तेनैव तस्य स्यादुपमानोपमेयता । असादृश्यविवक्षातो वदन्ति तमनन्वयम् ।। इति कपुस्तके दृश्यते।

दागमनप्रभवप्रीते: सैव सदृशी न त्वितरप्रभवेति व्यज्यते । एतादृशव्या-
वृत्त्यर्थमनन्वयालंकारलक्षणेऽव्यंग्यत्वविशेषणं पूर्ववद्द्रष्टव्यम् ।।

इत्यनन्वयप्रकरणम् । [1]

अथ स्मरणालंकार:-

स्मृति: सादृश्यमूला या वस्त्वन्तरसमाश्रया ।
स्मरणालंकृति: सा स्यादव्यंग्यत्वविशेषिता । [2]

यथा--

'अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्षीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियाया: ।।'

यथा वा--

'दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्त: स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य [3] श्रियमिव कांचिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरि: ।।'

एकत्र सदृशदर्शनात्तत्सदृशधर्मिका [4] स्मृति: । इतरत्र सदृशदर्शनात्त-
त्सदृशलक्ष्मीसंबंन्धिनो जलनिधिमन्थनस्य स्मृति: । उभयत्रापि सादृश्यमू-
लकवस्त्वन्तरस्मृतित्वमविशिष्टम् । अत एव [5] सदृशासदृशसाधारण्यार्थतया
लक्षणे वस्त्वन्तरग्रहणमर्थवत् ।

'सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति ।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरंगं यत:
क्वासि प्रेयसि हा कुरंगनयने चन्द्रानने जानकि ।।'

अत्र श्रुतकुरंगसंबन्धिनस्तन्नयनस्य स्मरणात्तत्सदृशसीतानयनस्मृति-
स्तत्संबन्धिसीतास्मृतिश्चेति । किं त्वेषा [6] व्यंग्या, अलंकार्यभूता च । तद्व्या-
वृत्त्यर्थमव्यंग्यत्वविशेषणम् [7] ।

---

१- चित्रमीमांसायाम् इत्यधिकं गपुस्तके २- स्यातव्यंग्य--ख- ३- आलोक्य-क
४- ततसदृशधर्मिका-ख, ५- अतएव इति क-खपुस्तकयो: नास्ति ६- क्वेषा (?)
ख -७- व्यावृत्त्यर्थव्यंग्यत्व--ख

'अत्युच्चा: परित: स्फुरन्ति गिरय: स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती[१] किमपि न क्लान्तासि[२] तुभ्यं नम: ।।
आश्चर्येण मुहुर्मुहु: स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव[३] भुजो वाचस्ततो मुद्रिता: ।।'

[४]स्तूयमानभूसंबन्धिनो भूभृद्भुजस्य[५] स्मृतिर्न सादृश्यमूलेति[६] नात्र स्मरणालंकार: । किं तु स्मृते: संचारिभावस्य भूभृद्विषयरतिभावांगत्वात्प्रेयोलंकार: ।

'स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीञ्ज्योतिर्मयान्सप्त सस्मार स्मरशासन: ।।'

अत्र चिन्तामूला स्मृति: विच्छित्तिविशेषाभावान्न कश्चिदलंकार: । एतदुभयव्यावृत्त्यर्थं सादृश्यमूलेति विशेषणम् । स्वमेते भेदाभेदसाधारणसाधर्म्यमूला अलंकारा:[७] प्रदर्शिता: ।।

इति[८] स्मरणालंकारप्रकरणम् ।

---

अथाभेदप्रधानेषु प्रथमं रूपकं निरूप्यते-

आरोपविषयस्य स्यादतिरोहितरूपिण: ।
[९]उपरञ्जकमारोप्यमाणं तद्रूपकं मतम् ।।

अत्रारोपविषयस्येत्यनेनोत्प्रेक्षातिशयोक्त्योर्व्यावृत्ति: । तत्र मुखादेरारोपविषयत्वाभावात् । अतिरोहितरूपिण इत्यनेन ससंदेहभ्रान्तिमदपह्नुतीनां व्यावृत्ति: । तेषु संदेहभ्रान्त्यपह्नवैर्विषयस्य तिरोधानात् । उपरञ्जकमित्यनेन समासोक्तिपरिणामव्यावृत्ति: । तयोर्हि नोपरञ्जकत्वं विषयेष्वताद्रूप्यापादकत्वलक्षणम् । समासोक्तौ व्यवहारमात्रसमारोपेण ताद्रूप्यप्रतीतेरेवाभावात् । परिणामे आरोप्यमाणस्यैव विषयताद्रूप्यापत्त्या विषयस्यारोप्यमाणताद्रूप्यापत्त्यभावादित्याहु: ।।

अत्रेदं विचार्यते । आरोपाध्यवसाययो: कीदृशं भेदमभिसंधा(य)रोपविषयस्येत्यनेनोत्प्रेक्षाव्यावृत्तिरुच्यते । यदि विषयविषयिणोरभिहितयोरभेदप्रतिपत्तिरारोप: : विषयनिगरणेन विषयिणस्तदभेदप्रतिपत्तिरध्यवसाय

---

१- बिभ्रता-ख २- भ्रान्ता-ख,ग ३- स्मृतव-ख ४- अत्र इत्यधिकं कपुस्तके ५- भूभृत्पदस्य -ख ६- मूलेतिनात्रेति -क ७- अलंकार: ख ८- चित्रमीमांसायाम् इत्यधिकं गपुस्तके ९- उपरञ्जकमित्यारभ्य अतिरोहितरूपिण इत्यन्तं ख-पुस्तके नास्ति

इति भेदमभिसंधाय, तदोत्प्रेक्षारोपमूलैव स्यात् । तत्र "नूनं मुखं चन्द्रः" इति विषयस्य मुखास्याप्यभिधानेन तन्निगरणाभावात् । ततश्च तत्रातिव्याप्ति[1]रनिवारितैव स्यात् । तादूप्यप्रतिपत्ति[2]रारोपस्तदभेदप्रतिपत्तिरध्यवसाय इति तयोर्भेदः । मुखं चन्द्रः" इत्यादिरूपके चन्द्रस्य यद्रूपं चन्द्रत्वं तेन रूपवत्तामात्रं मुखस्य प्रतीयते । न तु प्रसिद्धचन्द्राभेदः । "मुखविषयायां "चन्द्रः" इत्याद्यतिशयोक्तौ तु तदभेद एव प्रतीयत इति चेत्, न । वैपरीत्यस्यापि वक्तुं शक्यत्वात् । न च वाच्यम् ।

"इन्दोरपि मृगाङ्कदृशीणां मुखेन्दुरतिरिच्यते ।
निर्जरैः पीयमानोऽपि यः कदाचिन्न हीयते ।।"

इति मुखचन्द्रस्य प्रसिद्धचन्द्राद्यतिरेकवर्णनं तदभेदप्रतिपत्तौ न संभवतीति रूपके तादूप्यप्रतिपत्तिरेवेति । तथा सति हि

"सुधाबद्धग्रासैरुपवनचकोरै[3]रनुसृतां
किरञ्ज्योत्स्नामच्छां लवलिफल[4]पाकप्रणयिनीम् ।
उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ।।"

"अपरः पाकशासनः" इत्याद्यतिशयोक्तौ "अपर इव पाकशासनः" इत्याद्युत्प्रेक्षायां च रूपकवदेव[5] प्रसिद्धचन्द्राद्यभेदप्रतिपत्त्य[6]भावेन तादूप्यप्रतिपत्तिरेव स्यादिति तयोर्लक्षणस्यातिव्याप्तिरनेना[7]निवारिता स्यात् । अथ तत्र प्रसिद्धचन्द्राद्यभेदप्रतिपत्त्यभावेऽप्युपाचकल्पितापरचन्द्राद्यभेदप्रतिपत्तिः संभवतीति चेत् । रूपकेऽप्येवं वक्तुं शक्यमित्यसंभव एव लक्षणस्य स्यात् । किं चातिरोहितरूपिण इत्यनेन ससंदेहभ्रान्तिमतोरतिव्याप्तिवारणेऽपि नापह्नवेऽतिव्याप्तिवारणम्[8] । नेदं मुखं किं तु चन्द्रः" इत्यत्र मुखे मुखत्वाभावारोपस्य चन्द्रत्वोपस्य[9] चाहार्यत्वेन विषयतिरोधायकत्वाभावात् । आहार्यारोपस्यापि तिरोधायकत्वे रूपकेऽपि लक्षणस्यासंभवः स्यात् । उत्प्रेक्षाया अप्याहार्य[10]संभावनारूपाया अतिरोहितरूपिण[11] इत्यनेनैव व्यावृत्तिसिद्धावारोपविषयस्येति विशेषणस्य वैयर्थ्यं च स्यात् । अतिशयोक्तौ विषयस्य निगीर्णस्य तिरोहितत्वेन तस्या अप्यनेनैव व्यावृत्तिः[12] । अपि च ;

---

१- तत्राप्याप्तिः ख- २- अथ तादूप्य--क,ख ३- चकोरैरनुसृतः -ख
४- नवलवलिफल--क, नवलवलिफलकिपूणयिनी-ख ५- रूपकपदेव-ख
६- प्रतिपत्त्यसंभवेन-क,ख ७- व्याप्तिरनन-ख ८- अतिव्याप्तिवारन्नेदं मुखं-- ख
९- चन्द्रत्वारोपस्य इति ख-पुस्तके छिराकृतम १०- आहार्या-क ११- रूपित-ख
१२- व्यावृत्तिसिद्धेः -क,ख,ग

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ।।'

इति निदर्शनायामतिव्याप्तिः । तत्रोपमेयवाक्यार्थे उपमानवाक्यार्थता-रूप्यारोपसद्भावात् । यदि चारोपविषयस्य पदार्थस्येति विशेषणम्[1] तथा-प्यलक्तककृतत्वत्पादनखमार्जनं श्रीखण्डलेपकृतविधुपाण्डुरीकरणमिति नि-दर्शनायामतिव्याप्तिः ।

'अंघ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे ।
विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु वः[2] ।।'

इति रूपकेऽव्याप्तिश्च । यत्तु सरस्वतीकण्ठाभरणोक्तं लक्षणम् ---

'यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात् ।
उपमेये भवद्वृत्तिस्तदा तद्रूपकं विदुः ।।' इति ।

तदप्यतिशयोक्तावतिव्याप्तम् । 'मुखं चन्द्रः' इति रूपके चन्द्रशब्दस्य मुखे गौणसारोपलक्षणा । चन्द्र इत्यतिशयोक्तौ साध्यवसानलक्षणेत्यालं-कारिकसिद्धान्तात् । वस्तुतस्त्वतिशयोक्तावेव लक्षणा न तु रूपके इति शक्यं व्यवस्थापयितुम् । तथाहि । अतिशयोक्तौ विषयाभिधायिमुखादि-पदाप्रयोगाच्चन्द्रादिपदेनैव तत्प्रत्यायनं कार्यमिति तस्य तत्र लक्षणावश्य-मास्थेया । रूपके विषयविषयिणोः स्वस्ववाचकाभिहितयोरभेदप्रतिपत्तिः संसर्गमर्यादयैव संभवतीति किमर्थं तत्र लक्षणा, अशक्या च तत्र लक्ष-णाभ्युपगन्तुम् । कथम् । 'मुखं चन्द्र' इत्यत्र लक्षणया मुखे प्रवर्तमानं चन्द्रत्वं[3] केन निमित्तेन प्रवर्तेत । मुखत्वेन वा, मुखासाधारणकान्तिविशेषेण[4] वा, च-न्द्रत्वेन वा, चन्द्रासाधारणकान्तिविशेषेण वा, मुखचन्द्रोभयानुगतकान्तिसा-मान्येन वा, मुखगतचन्द्रसादृश्येन वा । नाद्यः । मुखपदेन[5] पौनरुक्त्यापत्तेः । मुखत्वस्य शक्यासंबन्धित्वेन तेन निमित्तेन लक्षणायोगाच्च । अत एव न द्वितीयः[6] । न तृतीयचतुर्थौ[7] । मुखावृत्तिधर्मयोस्तत्र प्रवृत्तिनिमित्तत्वायो-गात् । न पंचमः । कान्तिमान्मुखचन्द्र इत्यत्र कान्तिमत्पदेन पौनरुक्त्या-पत्तेः । नापि षष्ठः । सादृश्यस्य शब्दप्रतिपाद्यत्वेनाव्यंग्यत्वेन रूपकस्यो-

---

१- विशेषणीयम्- क,ख,ग २- नः -ख ३- चन्द्रपदं-क ४- मुखसाधारण-ग
५- मुखपदे -क, मुखपदेन पौनरुक्त्यापत्तेः इति द्विरावृत्तम् ख पुस्तके ६- द्वितीयम्-ख
७- अपि इत्यधिकं क-पुस्तके

पमापृथग्भावादनुपपत्ते: । अभेदप्रधानं रूपकमिति सिद्धान्तविरोधाच्च[1] त-
स्माद्रूपके स्वस्वपदाभिहितयोर्विषयविषयिणोरभेद[2]प्रतिपत्ति: संसर्गमर्यादयेत्येव
वक्तव्यमिति लक्षणस्यासंभवोऽपि दोष:। यदा तु "वक्त्रेन्दौ तव सत्ययं य-
दपर: शीतांशुरुज्जृम्भते", "द्वौ चन्द्रौ जगतो राजन्स दिवि त्वं महीतले"
इत्यादौ विषयस्य प्रसिद्धचन्द्राभेदप्रतिपत्तिर्न संभवतीति कथंचिदिन्द्वादि-
पदस्य विषये लक्षणा कल्प्यते । तथापि "कान्तिमान्मुखचन्द्र" इत्यादौ का-
ठकाध्यापकादिवत्संसर्गमर्यादयैवाभेदप्रतिपत्तिसंभवेनातिक्लिष्टलक्षणाश्रयणा-
योगात्तत्राव्याप्तिर्वज्रलेपायते । अपि च ।

"सेतु: शैलैस्त्वया[3] बद्ध: पूर्वं जेतुं दशाननम् ।
कं जेतुमथ[4] बध्नासि यशश्चन्द्रोपलै: प्रभो ।।"

"चिरादस्त्कौतुकाविष्टं कल्पवृक्षमुदीक्षितुम् ।
तन्मे सफलमद्यासीन्नेत्रं त्वय्यवलोकिते[5] ।।"

इत्यादौ व्यंग्यरूपके चाव्याप्ति: । अत्र ह्याद्ये वर्ण्यं प्रभुं प्रति रावण-
वधाय त्वया सेतुर्बद्ध इति निर्दिश्यमानेन[6] वस्तुना त्वमेव राम इति रूपकं
व्यज्यते । न च तत्र विषये गौणं रामपदमस्ति । द्वितीये त्वामवलोकयता
मम नेत्रेण चिरकाङ्क्षितं कल्पवृक्षावलोकनं लब्धमिति प्रतीयमानेन विशे-
षालंकारेण त्वमेव कल्पवृक्ष इति रूपकं व्यज्यते । तत्र कल्पवृक्षपदं प्रसि-
द्धकल्पवृक्षपरमेव न विषयलक्षकमिति स्पष्टम् ।

"तत: कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ।।"

इति शुद्धसारोपलक्षणामूलकरूपके चाव्याप्ति: । तत्र ह्यानन्दहेतुत्वा-
दानदानन्दत्वरूपणं न त्वौपम्यात् । यत्तु "आयुर्घृत"मित्यादौ विच्छित्तिविशेषाद[7]-
र्शनाच्छुद्धसारोपलक्षणास्थले न कश्चिदलंकार इति । तदयुक्तम् । "गौर्वा-
हीक" इत्यादौ विच्छित्तिविशेषादर्शनेन गौणसारोपलक्षणास्थलेऽप्यलंकार-
त्वाभावप्रसंगात्[8] । क्वचिद्वैचित्र्यादर्शनेऽप्यन्यत्र वैचित्र्यवति स्थलेऽलंकार-
त्वमिष्टापि वक्तुं युक्तम् । "नेत्रानन्देन चन्द्रेण"[9] इति ।

---

१- च इति कपुस्तके नास्ति २- णो रामव-ख-३- शैलस्त्वया-क ४- जेतुमध्य-ख
५- अवलोकिते: (?) - ख-६- निर्दिश्यमान इति वस्तुना-ख, ७- विशेष(?)
क-८- अलंकारभाव--क,ख ९- इति इति क-ख-ग पुस्तकेषु नास्ति

"आयुर्दानमहोत्सवस्य, विनतत्राणीभूता मूर्तिमान्
विश्वासो, नयनोत्सवो मृगदृशां, कीर्ते:[१] प्रकाश: पर: ।
आनन्द: कलिताकृति: सुमनसां, वीरश्रियो जीवितं
धर्मस्यैष[२] निकेतनं, विजययते[३] वीर: कलिङ्गेश्वर: ।।

इत्यादौ शुद्धसारोपलक्षणास्थलेऽपि वैचित्र्यदर्शनात् । यदि तु हेतुमता सह हेतोरभिधानमभेदतो[४] हेतुरिति मतान्तराश्रयेण तत्र हेत्वलंकारो न रूपकमित्यभ्युपगम्येत ; तदा "आरोपविषयस्य स्यात्" इति पूर्वोदाहृतलक्षणस्य तत्रातिव्याप्ति:[५] । एवम्--"उपमैव[६] तिरोभूतभेदा रूपकमुच्यते[७] । रूपकं तद[८]भेदो य उपमानोपमेययो:" इत्यादिलक्षणेष्वप्यतिव्याप्त्यादिदोषा यथासंभवमुन्नेया: । अत्र वदाम: --

"बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते ।
उपरञ्जकतामेति विषयी रूपकं तदा ।।"

बिम्बाविशिष्ट इति विशेषणात् "त्वत्पादनखरत्नानाम्" इति निदर्शनायां नातिव्याप्ति: । तत्र हि चन्द्रो यथा स्वत: शुभ्रत्वादनासंजनीयधावल्यस्तथा नखा: स्वतोऽरुणत्वादनासंजनीयारुण्या इति सादृश्येन नखानां चन्द्रस्य च बिम्बप्रतिबिम्बभाव: । अलक्तकचन्दनयोरन्यत्र स्ववर्णासंजकत्वेन । ततश्च तत्र बिम्बभावा[९]न्नखालक्तकविशिष्टे एव[१०] रञ्जने तत्प्रतिबिम्बभूतचन्द्रचन्दनविशिष्टपाण्डरीकरणमुपरञ्जकम् । एवमन्यत्रापि "अरण्यरुदितं कृतम्" इत्यादितादृप्यारोपवन्निदर्शनोदाहरणे सर्वत्र बिम्बभावापन्नवस्तुविशिष्ट एवोपमेये तत्प्रतिबिम्बविशिष्टमुपमानमुपरञ्जकमिति न क्वाप्यतिव्याप्ति: । रूपके तु न क्वचिदपि बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टतया विषयविषयिणोरुपादानम् । सावयवरूपकेऽपि विशेष्यरूप[११]णात्पृथगेवावयवेषु रूपणं न त्ववयवविशिष्टरूपेण विशेष्ये । "अङ्घ्रिदण्डो हरेरूर्ध्वम्" इत्यत्राप्यङ्घ्रिदण्डनालदण्डयोर्न बिम्बप्रतिबिम्बविशिष्टता । तयो: प्रतीयमानेन[१२] श्यामलत्वविधातृविष्टरकमलश्लिष्टत्वाद्यनुगामिधर्मेणैवोपमानोपमेयभावात् । किं तु विधातृविष्टरकमलश्लिष्टत्वरूपसाधारणधर्मवक्तासंपादनार्थं विशेषणविशिष्टतामात्रमुपमेयस्य ।

---

१-कीर्ति: क- २- धर्मस्यैकतिकेतनं-क ३- विजयते" इति खपुस्तके नास्ति ४- हेतोरभिधानं भेदतो--ख ५- तत्राव्याप्ति: -घ- ६- उपमैवं-ख ७- रूपकमिष्यते-रूपकमिष्यते: (?) ख-८- तद्रूपकमभेदो-घ- ९- बिम्बभावापन्ननखा--क,ग १०- एव इत्यारभ्य वस्तुविशिष्ट (२०प०) इत्यन्तं खपुस्तके नास्ति ११- विशिष्य-क १२- प्रतीयमनत्वविधातृ---ख

निर्दिष्ट इति विशेषणान्न निगीर्णविषयायामतिशयोक्त्यामतिव्याप्तिः[१]। व्यंग्यरूपकोदाहरणेषु विषयिवाचकाप्रयोगसंभवेऽपि विषयनिर्देशः सार्वत्रिक इति न तत्राव्याप्तिः। "नेत्रानन्देन" इत्यादौ हेत्वलंकार इति मते विषय इत्यनेनोपमेय इत्येतदर्थकेन तदा(व्या)वृत्तिः। तत्रापि रूपकमित्येकावलीकारादिमते विषयपदं धर्मिमात्रपरं[२] स्पष्टार्थम्[३]।

अनिह्नुते निषेधास्पृष्ट इति विशेषणादपह्नुतौ नातिव्याप्तिः।

उपरञ्जकतामाहार्यताद्रूप्यनिश्चयगोचरतामेतीत्यनेन ससंदेहोत्प्रेक्षासमासोक्तिपरिणामभ्रान्तिमत्स्वतिव्याप्तिनिरासः। ससंदेहोत्प्रेक्षयोर्निश्चयस्यैवाभावात्। समासोक्तौ परिणामे च तस्य ताद्रूप्यागोचरत्वात्। समासोक्तौ व्यवहारमात्रसमारोपात्। परिणामे आरोप्यमाणस्यैव विषयताद्रूप्यगोचरत्वात्। भ्रान्तिमति स्वतः कल्पितस्य वा प्रवृत्त्यादिपर्यन्तस्य स्वारसिकस्यैव[४] निबन्धने तस्यानाहार्यत्वात्।

अव्यंग्यविशेषणाच्चैतदेवालंकारभूतस्य[५] रूपकस्य लक्षणमिति सर्वं सुस्थम्। तच्च रूपकं त्रिविधम्- निरवयवं सावयवं परम्परितं च। निरवयवं केवलं माला चेति द्विविधम्। सावयवं तु[६] समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विविधम्। परम्परितं च[७] श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधं सत्केवलं माला चेति द्वैविध्याच्चतुर्विधम्। एवमष्टविधो[८] रूपकालंकारः[९]।तत्र केवलं निरवयवं यथा--

"कुरंगीवांगानि स्तिमितयति गीतध्वनिषु य-
त्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।
अनिद्रं यच्चान्तः[१०] स्वपिति तदहो[११] वेद्म्यभिनवां
प्रवृत्तोऽस्याः[१२] सेक्तुं हृदि मनसिजः प्रेमलतिकाम्।।"

मालानिरवयवं यथा--

"सौन्दर्यस्य तरंगिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मवचसामुल्लासनावासभूः[१३]।

---

१- अतिशयोक्तावतिव्याप्तिः क,ख,ग २- धर्मिभावपरः ख-३- स्पष्टार्थः -ख ४- स्वारसिकभ्रमस्यैव-क ५- --षणाच्चैवदमेवालं--क-६- तु इति क-ख-ग पुस्तकेषु नास्ति ७- च इति कपुस्तके नास्ति ८- अष्टविध-क ९- रूपकलम-क १०- यश्चान्तः क ११- तदेहोत्यभिनवं-ख १२- प्रवृत्तोस्याः-ख १३- नर्मरहसां-क,ख

विधा वक्रगिरां विधेरन[1]वधिप्रावीण्यसाक्षात्क्रिया
[2]प्राणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ।।

समस्तवस्तुविषयं सावयवं यथा--

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न[3]न्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ।।

एकदेशविवर्ति सा[4]वयवं यथा--

प्रौढमौक्तिकरुचः पयोमुचां बिन्दवः कुटजपुष्पबन्धवः ।
विद्युतां नमसि नाट्यमण्डपे कुर्वते स्म कुसुमाञ्जलिश्रियम् ।।

अत्र नभसो नाट्यमण्डपत्वेन रू[5]पणाद्विद्युतामर्थान्नर्तकीत्वं गम्यते । इ-
त्येकदेशे रूपकस्य वि[6]शेषणवाच्यतया वर्तनादिदमेकदेशविवर्ति ।

श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा--

अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ।।

अत्र त्वमेव मुक्तारत्नमित्यारोपणपूर्व[7]कः सद्वंश उत्तमान्वय एव सद्वंश
उत्कृष्टवेणुरित्यारोप इति रूपकद्वयमपि संभूतपरम्परमिति परम्परितम् ।
व[8]शे श्लिष्टशब्दनिबन्धनं च । तदेव मालापरम्परितं यथा--

विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वान[9]र ।
सत्यप्रतिनि[10]धानदक्ष विजयप्राग्भाव भीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्च[11]मुच्चैः क्रियाः ।।

अश्लिष्टशब्दनिबन्धनं केवल[12] परम्परितं यथा--

निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपंचम् ।
प्रथममिह[13] भवान्स कूर्म[14]नाथो जयति चतुर्दशलोकवल्लिकन्दः ।।

---

१- रणाविविप्रा- ख २- बाणाः-ग ३- न्यंतर्द्धीन-क ४- सादृश्यं-ख
५- रूढ रूपेण-ख ६- विशेषणं-ख ७- पूर्वक-क ८- वशेति-क,ख,ग ९-
वैश्वानरः-ख १०- --विधान -ख ११- वैरचमुच्चैः-क १२- केवलपरम्परितं-क १३-
प्रथमइह -क १४- कूर्ममूर्तिः-क

तदेव मालापरम्परितं यथा--

"पर्यङ्को राजलक्ष्म्या हरितमणिमय: पौरुषाब्धेस्तरंग:
संग्रामत्रासताम्यन्मुरलपतियशोहंसलीलाम्बुवाहः[1] ।
भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्त्यानदानाम्बुपट्ट:
खङ्गःक्ष्मासौविदल्ल: समिति विजयते मालवाखण्डलस्य ।।"

इदं वैधर्म्येणापि दृश्यते । तत्केवलं यथा--

"आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य ।
शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाह: ।।

मालारूपकं यथा--

"सौजन्याम्बुमरुस्थली सुजनतालेख्य[2]द्युमिच्छिर्णं-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषा[3]पि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ।।"

एवमष्टौ भेदा रूपकालंकारस्य प्राचीनै: प्रदर्शिता: । एवं भेदा उपमाया अपि वक्तुं शक्या: । एकत्र प्रदर्शितेन प्रकारेण संभवस्थलेऽन्यत्राप्यूह्या इति न प्रदर्शिता: । तथाहि ;"वागर्थाविव संपृक्तौ" इत्यादौ केवलनिरवयवोपमा । "ज्योत्स्नेव नयनानन्द:" इत्यादौ मालानिरवयवोपमा ।

"तत: प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्[4]०००००० रसानिव ।।"

इत्यत्र समस्तवस्तुविषयसावयवोपमा ।

"नेत्रैरिवोत्पलै: पद्मैर्मुखैरिव सर:श्रिय: ।
पदे पदे विभान्ति स्म चक्रवाकै: स्तनैरिव ।।"

इत्यत्रैकदेशविवर्तिनी[5] ।

"अत्यन्तरागिणमपि निपीतवसुसंचयम्[6] ।
गणिकेवापरदिशा पूषाणं निरकासयत् ।।"

इत्यत्राप्येकदेशविवर्तिनी[7] । पूर्वत्र विशेषणोपमायां[8] विशेष्योपमा गम्यते, उत्तरत्र विशेष्योपमया[9] विशेषणोपमेति भेद: ।

---

१- --वाहा:-ख २- सुचरितालेख्य--क ३- यौरेषापि-ख ४- दुरिष्यत्-घ
५- विवर्तनी-ख ६- व्यपेतवसुसंचयम्-क,ख ७- विवर्तिनी:-क, विवर्तनी-ख
८- विशेष्योपमया-क, विशेषणोपमया-क, विशेषणोपमाया-ख
९- विशेष्योपमाया-क,ख

"दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला ।
आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलंकरेखा[1] ।।

इत्यत्राश्लिष्टशब्दनिबन्धनकेवलपरम्परितोपमा । अत्र ह्यम्बुराशेरयश्चक्रेणोपमा । तद्वाराश्लिष्टकलंकरेखया बेलाया उपमा चेति द्वयमपि संजातपरम्परम् । यथा वा--

"अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज[2] कृप समरं[3] मुञ्च[4] हार्दिक्य शंका[5]
ताते चापद्वितीये वहति रणधुरां[6] को भयस्यावकाश: ।।

अत्र द्रोणस्यौर्वेणोपमा प्रतिबलजलधेरित्यत्रोपमाया: साधिकेत्युपमाद्वयमपि[7] संजातपरम्परम् । एवं "राजहंसायते राजा विद्वणामेण मानसे" इत्यत्र श्लिष्टशब्दनिबन्धनकेवलपरम्परितोपमा । उभयत्रापि मालापरम्परितमनयैव रीत्योन्नेयम् । "रेणुध्वान्तस्य रक्तौघो बालघर्मकरायते" इति वैधर्म्येण रूपकवदुपमेति सर्वं समानम् ।

अयं तु विशेष: । समस्तवस्तु विषयं रूपकं न विशिष्टरूपकं भवति । विषयविषयिणोर्विम्बप्रतिबिम्बधर्मविशिष्टयोस्ताद्रूप्यारोपे निदर्शनाया एवावतरणात् । सावयवोपमा तु विशिष्टोपमां गमयति । "तत: प्रतस्थे कौबेरीं भास्वानिव" इत्यत्र शरदीच्यारुद्धतुत्तरां दिशं प्रस्थितस्य रघोर्विशिष्टस्य किरणै रसाञ्शोषयितुमुत्तरां दिशं प्रस्थितेन विशिष्टेन रविणा साधर्म्यस्य फलितार्थतया लाभात् । एवं च क्वचिदुपमयान्यत्रोपमाया[8] गम्यत्वं चतुर्धा पर्यवस्यति । क्वचिद्विशेषणोपमया विशेष्योपमाया: । विश्वजित्सर्वपृष्ठोऽतिरात्र: इत्यत्र पृष्ठगतसर्वताविधिनैव तद्विशेष्यपृष्ठविधे: । क्वचिद्विशेष्योपमया विशेषणोपमाया: । वैकृतप्रधानविधिनैव प्राकृततदंगकलापविधे: । उभयमप्येकदेशविवर्तित्वेनोदाहृतम् । क्वचिदवयवोपमया विशिष्टोपमाया गम्यत्वम् । अंगप्रधानगोचरप्रत्येक[9]विधिकलापेनेव सर्वांगविशिष्टप्रधागोचरप्रयोगविधे: । तत्तु समस्तवस्तुविषयोपमोदाहरणे

---

१- --लेखा-ख २- त्यज-ख ३- सदनं-ख ४- पाच-ख ५- शंका-ख
६- रणधुरं-ख ७- सावकेत्यु--ख ८- उपमया-ख ९- प्रत्येकं-क

दर्शितम् । एकवाक्यतायामवयवोपमया विशिष्टोपमाया गम्यत्वे इदमुदाहरणम् । वाक्यभेदेनापि दृश्यते--

'हस्त इव भूतिमलिनो यथा यथा लंघयति खलः[1] सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ।।'

अत्रावयवोपमा[2] । यथा भूतिमलिनो हस्तो दर्पणमधिकमधिकं घर्षयन्नुत्तरोत्तरं निर्मलीकुरुते (?) तथा खलः सुजनमधिकं घर्षयन्नुत्तरोत्तरं निर्मलमेव कुरुते इति विशिष्टोपमा गम्यते । क्वचिद्विशिष्टोपमया[3] तदवयवोपमानां गम्यत्वम् । विशिष्टविधिनैव विशेषणविशेष्यविधीनाम् । यथा--

'त्वदाननमधीराक्षमाविर्दशनदीधिति[4] ।
भ्रम(द्भृंग)मिवालक्ष्यकेसरं भाति पंकजम् ।।'

अत्र विशिष्टेन विशिष्टस्योपमया तदवयवभूतानां भृंगलोचनानां केसरदशनदीधितीनां[5] पंकजाननयोश्चोपमानोपमेयभावो गम्यते । एवमसंख्या उपमाविकल्पाः । तथा--

'किसलयकरैर्लतानां करकमलैः कामिनां मनो[6] जयति ।
नलिनीनां[7] कमलमुखैर्मुखेन्दुभिर्योषितां मदनः[8] ।।'

इत्येवमाद्या रसनारूपकाद्या[9] रूपकविकल्पा अप्यसंख्याः । उक्तं हि काव्यालोके--

'अपर्यन्तो विकल्पानां रूपकोपमयोर्यतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ।।' इति ।

इति रूपकप्रकरणम्[10] ।

---

अथ परिणामः -

'आरोप्यमाणस्य[11] प्रकृतोपयोगित्वे परिणामः' इति तल्लक्षणमुक्तम् । तत्र शंक्यते ।

'यामि मनोवाक्कायैः शरणं[12] करुणात्मकं जगन्नाथ ।
जन्मजरामरणार्णवतरणतरण्यं[13] तवांघ्रियुगम् ।।'

---

१- खलः इति खपुस्तके नास्ति २- अत्रावयवोपमायां-ख ३-विशिष्टोपमा-ख ४-आविर्दर्शन--क ५- नखदीधितीनां-ख,ग,घ ६- जगज्जयति-क,ख ७- नलिनीनाम् इति छिरावृत्तम् खपुस्तके ८- मनः-ख ९- रशना-क,ग १०- चित्रमीमांसायाम् इत्यधिकं क-ख-गपुस्तकेषु ११- आरो--पि (?) ख १२- शरणं खपुस्तके नास्ति १३- तरणः इति खपुस्तके नास्ति

'निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किं नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररास ।।
'स्तान्यवन्तीश्वरपारिजातजाता[१]नि तारापतिपाण्डुराणि ।
संप्रत्यहं पश्यत दिग्वधूनां[२] यशःप्रसूनान्यवतंसयामि ।।'

इति श्लोकेष्वारोप्यमाणानां तरुण्य-नयन-प्रसूनानां तरुण-निरीक्षणा-वतंसनरूपप्रकृतकार्योपयोगे सत्यप्युक्तलक्षणकृतालंकारसर्वस्वकारेणैव रूपकमंगीकृतम् ।

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।।'

इत्यादिश्रुतावारोप्यमाणानां रथिरथादीनां 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति वक्ष्यमाणाध्वपार[३]गमनरूपप्रकृतकार्योपयोगे सत्यपि भगवता बादरायणेन आनु[४]मानिकमप्येकेषामिति चेत् न शरीररूपकविन्यस्तगृहीतेर्दर्शयति[५] च' इति शारीरकसूत्रे रूपकमंगीकृतम् । अतस्तेषु लक्षणस्यातिव्याप्तिः । एवम्---

'भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो-[६]
रुच्चावचैरुपगतेषु सहस्रसंख्याम्[७] ।
दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां[८] दधते नलिन्यः ।।'

इति भ्रान्तिमति,

'विकसदमरनारीनेत्रनीलाब्जषण्डा-
न्यधिवसति सदा यः संयमाधःकृतानि ।
न तु रुचिरकलापे वर्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ।।'

इत्यपह्नुतौ,

उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयःकृतेन किम् ।
त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेश यत् ।।'

---

१- जात इति लघुस्तके नास्ति २- पश्यति दिग्वधूनां-क, पश्यतरि (?) वधूनां-ख ३- परागमन-ख ४- बादरायेनानुमानिक-क, बादरायणेन नानुमानिक--ग,घ ५- गृहीतेदर्शति-ख ६- इवेन्दोः-ख ७- संख्या-ख ८- कोकनदता-ख

इत्यतिशयोक्तौ[१],

चक्रभ्रमणकरत्वात्त्वद्दृष्टिभिर्दूरवर्ज्यमानत्वात् ।
श्रुत्यन्तखेलनत्वान्मशक[२] त्वामेव माधवं मन्ये ।।

इत्यनुमाने चातिव्याप्तिः । भ्रान्तिमत्यब्जिभाशोर्विकासे, अपह्नुतावमरनारीनेत्राणां ब्रह्मचर्यवितरणे, अतिशयोक्तौ कुम्भयुगस्य सरित्तरणे, अनुमाने माधवस्य चक्रभ्रमणे[३] च प्रकृतकार्योपयोगित्वात् । अपह्नुतौ तं यथा यथोपासते तथैव भवति[४] इति तत्क्रतुन्यायेन संयमाधःकृतामरनारीनेत्राधिष्ठानस्य ब्रह्मचर्यवितरणोपयोगित्वम् ।

सुहृदालापेनैव प्रणश्यति स्थास्नुरान्तरः क्लेशः[५] ।
कान्तामुखचन्द्रेण हि शाम्यति रुचिरेण विरहजस्तापः ।।

इति दृष्टान्तसंकीर्णपरिणामे चाव्याप्तिः । अत्रा[६]रोप्यमाणस्योपमानकोटयन्तर्गताप्रकृतकार्योपयोगित्वादिति ।

अत्राहुः । आरोप्यमाणस्य प्रकृतात्मनोपयोगित्वे परिणाम इति लक्षणार्थः । न चैवं सत्युदाहृतरूपकादिष्वतिव्याप्तिः । तेष्वारोप्यमाणानां तरण्यनयनप्रसूनसूर्यादीनां स्वात्मनैव तरणनिरीक्षणावतंसनकमलविकासनादिकार्योपयोगित्वसंभवेन तदर्थमङ्घ्रियुगविधुयशश्चन्द्रादिप्रकृतात्मतापत्त्यनपेक्षणात् न चोक्तलक्षणस्य परिणामेऽसंभवः । यत्रारोप्यमाणं किंचित्कार्योपयोगित्वेन निबध्यमानं स्वतस्तस्य तदुपयोगित्वासंभवात्प्रकृतात्मतापत्तिमपेक्षते तत्रैव परिणामांगीकारात् । यथा प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा इति । अत्र त्वब्जस्य वीक्षणो[७]पयोगित्वं निबध्यते । मयूरव्यंसकादिसमासेनोत्तरपदार्थप्राधान्यात् । न चोपमितिसमासा[८]श्रयणेन पूर्वपदार्थप्राधान्याद्दृश[९] एव तदुपयोगित्वं निबध्यत इत्यस्त्विति वाच्यम् । प्रसन्नेनेति सामान्यधर्मप्रयोगात् । उपमितं व्याघ्रादिभिः सामान्याप्रयोगे इति तदप्रयोग एवोपमितसमासानुशासनात् । अब्जस्य च वीक्षणो[६]पयोगित्वं न स्वात्मना संभवति । अतः प्रकृतदृगात्म-

१- 'च' इत्यधिकं खपुस्तके २- श्रुत्यन्त्यलेखन--ख ३- चक्रे भ्रमणे-ग,घ
४- तथैव ति इति-ख ५- केशः-ख ६- तत्र-क,खग ७- वीक्ष्यमाणोप--क
८- उपमितसमासा--ग ६- वीक्षमाणो--क

तापत्त्यपेक्षणात्परिणामालंकार: । नन्वेवं "यामि मनोवाक्कायै:" इत्यादिष्वपि तरणादिशब्दलक्षितजन्मनाशाद्युपयोगित्वं तरण्यादीनामंघ्रिद्वयाद्यात्मनैवेति तेष्वपि परिणामप्रसंग: । मैवम् । यस्य कार्यवाचिपदप्रथमप्रतीततन्मुख्यार्थनि[1]र्वर्तनसामर्थ्यं तदात्मनोपयोगित्वस्य ग्राह्यत्वात् । तरण्यादिपदमुख्यार्थ[2]-[3]निवर्तनसामर्थ्यस्य च तरण्यादिष्वेव व्यवस्थितत्वात् । तस्मादुदाहृतेषु रूपकमेव । तेषु च नातिव्याप्तिरिति । नन्वेवमुक्तातिव्याप्तिपरिहारे[4]ऽपि--

"सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टि: सा मदविस्मृत[5]स्वपरदिक्किं भूयोसोक्तेन वा ।
[6]सर्वं [7]विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्त: शून्यकरोऽपि सेव्यत इति भ्रात: क एष ग्रह: ।।"

इत्यप्रस्तुतप्रशंसायामतिव्याप्ति: । तत्राप्रकृतवारणरसनाविपर्ययादीनां प्रकृतदुष्प्रभुरसनाविपर्ययाद्यात्मतयैव तत्सेवात्यागलक्षणकार्योपयोगित्वात् । न हि यथा वारणस्य कर्णचापलं भ्रमरस्य तत्सेवात्यागे हेतु: तथा[8] तस्य रसनाविपर्यय: शून्यकरता[9] च तत्र हेतु: । मद: प्रत्युत तत्सेवायामेव हेतुरिति तस्य तत्यागहेतुत्वं दूरापास्तम् । एवमपि यद्येषां त्यागहेतुत्वं निबध्यते तद्वारणादीनामप्रकृतानां दुष्प्रभुप्रभृतितादात्म्यापत्त्यैव निर्वाह्यमिति । "सुहृदालापेनैव" इत्यत्रोदाहृतपरिणामेऽ[10]व्याप्तिश्च तदवस्था । तत्र चन्द्रवन्मुखस्याप्यप्रकृतत्वेन प्रकृतात्मनोपयोगित्वाभावात् । उच्यते । प्रकृतात्मनेत्यत्र प्रकृतशब्दो विषयमात्रपर इति नोदाहृतपरिणामाव्याप्ति: । उपयोगित्वं च प्रकृतागमकार्यं प्रति विवक्षितम् । अप्रस्तुतप्रशंसोदाहरणे प्रकृतदुष्प्रभुसेवात्यागम[11]कवारणसेवात्यागं प्रत्युपयोगित्वमिति न तत्रा[12]-तिव्याप्ति: । एवं च ---

"आरोप्यमाणमारोपविषयात्मतया स्थितम् ।
प्रकृतस्योपयोगि स्यात्परिणाम उदाहृत: ।।"

---

१- निर्वनसामर्थ्यं-ख २- तरणादिपदं-क,ख ३- निर्वर्तनसामर्थ्यस्य-ख ४- --परिहार:-ख (अपि इतिनास्ति) ५- विस्मृत-ख ६- पूर्वं-ख ७- निश्चितवानसि-ख ८- यथा-घ ९- त्यागहेतुत्वं-क १०- परिणामाव्याप्ति:-क ख,ग ११- गमकं-ख, १२- अपि इत्यधिकं खपुस्तके।

इति विद्यानाथलक्षणं प्रकृतस्येति पदस्य प्रकृतगमकस्येति व्याख्यानेन परिष्करणीयम् ।।

अयं च परिणामो द्विविधः । सामानाधिकरण्यवैयधिकरण्याभ्याम् ।

सामानाधिकरण्येन यथा--

"तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय ।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ।।"

अत्रारोप्यमाण आतरो विषयभूतसौमित्रिमैत्री[1]रूपतापत्त्या गुहोपकारलक्षणकार्योपयोगीति परिणामः। उभयोर्विभक्त्यैक्यात्सामानाधिकरण्यम् ।

वैयधिकरण्येन यथा--

"पुन्नागजालकैर्हारान्काञ्ची[2]: केयूर[3]दामभिः ।
कर्णिकाः कर्णिकारैश्च विहर्तुं विदधुर्वने ।।"

अत्रारोप्यमाणा हारादयो विषयभूतपुन्नागजालकादिरूपतयैव वनक्रीडोपयोगिन इति परिणामः । विभक्तिभेदाद्वैयधिकरण्यम् ।

[4]इदं च वैयधिकरण्यं रूपकेऽपि संभवति । यथा--

"तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारकन्धराय गिरिजासङ्गै[5]कशृङ्गारिणे ।
नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे
नागैः कंकणिने नगेन गृहिणे नाथाय सेयं नतिः ।।"

अत्र नदीदृशोर्विषययोर्विभक्तिरारोप्यमाणयोः शेखरतिलकयोर्नास्ति ।

यथा वा--

"द्विर्भावः पुष्पकेतोर्विबुधविटपिना[6] पौन[रुक्त्यं] विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः ।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्व-
न्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ।।

---

१- मैत्री इति ख पुस्तके नास्ति २- काञ्चित्तु-ख ३- केसरदामभिः-क,ख
४- इदम् इत्यारभ्य रूपकेऽपि इत्यन्तं खपुस्तके नास्ति ५- दिविजासङ्गैक-ख ६- विटपिना-ख

अत्र विषयस्य राज्ञो विषयिणां पुष्पकेतुप्रभृतीनां च विभक्तिभेदः ।

अथ परिणामस्य व्यंग्यतायां किमुदाहरणम् ।

नरसिंहधरानाथ के वयं तव वर्णने ।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते[1] ।। "

इति विद्याधरेणोदाहृतम् । अत्र राजपदेन चन्द्रे विषये निर्दिष्टे[2] तत्रारोप्यमाणस्य नृपस्याक्रमणरूपकार्योपयोगिनः प्रतीतेः परिणामो व्यज्यत इति, तदयुक्तम् । अत्र ह्यारोप्यमाणस्य नृपस्य[3] नृपात्मनैवाक्रमणोपयोगो[4] न चन्द्रात्मना । विद्याधरेणापि विषयिणः स्वरूपेण कार्यानुपयोगे[5] तदुपयोगाय विषयिणो[6] विषयात्मना परिणत्यपेक्षायामेव परिणामोऽङ्गीकृतः[7] । यदाह—

"तं परिणामं द्विविधं कथयन्त्यारोप्यमाणविषयतया ।
परिणमति यत्र विषयः[8] प्रस्तुतकार्योपयोगाय ।।"

[9]विद्यानाथेन तूदाहृतम् —

"एष शाम्यति बस्तापो राजपादनिषेवया ।
कण्टकद्रुममूलेषु[10] वासस्तं शमयेत्कथम् ।।" इति ।

नास्त्यत्र प्रागुक्तदोषानुषंगः । नृपचरणसेवायां प्रस्तुतायामारोप्यमाणायाः चन्द्रचरणसेवायाः[11] नृपचरणसेवात्मतयैव[12] तापशान्तिहेतुत्वात् । तापशब्दस्य सौरतापसाधारण्येऽपि प्रकृते राज्यभ्रंशजनिततापस्यैव विवक्षितत्वात् । तन्निवर्तने[13] चन्द्रकिरणसेवायाः स्वतोऽसामर्थ्यात् । तथापि प्राचीनानां मत एवैतदुदाहरणम् । ते हि "राजपादनिषेवया" इत्यस्य प्रकरणनियन्त्रितत्वादप्रकृतायां चन्द्रकिरणसेवायां शब्दशक्तिमूलो व्यञ्जनाव्यापार इति मन्यन्ते । वस्तुतस्त्वप्रकृतेऽप्यर्थे शब्दानामभिधैव[14] व्यापार इत्यस्माभिः श्लेषप्रकरणे व्यवस्थापयिष्यमाणत्वात्, इहापि "राजपादनिषेवया" इत्यत्र चन्द्रकिरणसेवायामप्यभिधैव[15][16] व्यापारः । अतः प्रस्तुताप्रस्तुतद्वयतादूप्यप्रतीतेः श्लेषभित्तिकातिशयोक्तयादिष्विव[17] संसर्गविधयैव लाभात्तस्य प्रकृतकार्योपयोगितायास्तृतीयया[18] लाभाच्च न क्वापि व्यञ्जनाव्यापारापेक्षेति[19] नेदं परिणामध्वनेरुदाहरणम् । इदं च दूषणं पूर्वोदाहरणेऽपि तुल्यम् । इदं तूदाहरणम्[20]—

---

१- विजृम्भते:-ख २- विषयनिर्दिष्टेग्ख ३- नृपत्य इति ख पुस्तकेनास्ति ४- वाक्रमणोरूपयगेन-ख ५- कार्यानुपयोगो-ग ६- विषयस्य-ख ७- अंगीकृता:ख ८- विषयी-क ९- इति इत्यधिकं खपुस्तके १०-कन्टकि-क, कुन्टकी-ख ११-चन्द्रकिरण-क,चन्द्रकिरणासेवाया-ख-१२- नृपतिचरण-क ख १३- तन्निवर्तनेच-क,ख १४- मभिधेयव्यापार-ख १५- अपि इति क पु०नास्ति १६- अभिधैव इति खपुस्तकेनास्ति १७-श्लेषभित्तिकाभेदध्यवसायमूलकातिशयोक्त्यादिष्विव-क,ख १८- तृतीयाया-ख,घ-१९-व्यंजनव्यापारा--ख-
२०- तु इति ख पुस्तकेनास्ति

'चिराद्विषहसे तापं चित्त चिन्तां परित्यज ।
नन्वस्ति शीतलः शौरेः पादाब्जनखचन्द्रमाः ।।'

अत्र चिरतापार्तं प्रति हरिपादाब्जनखचन्द्रसद्भावप्रदर्शनेन तमेव निषेवस्व, तन्निषेवणादयं तापः शान्तिमेष्यतीति परिणामो व्यज्यते । एवं रूपकवैलक्षण्ये[1] परिणामो निरूपितः । तत्र रूपके प्रकृतमप्रकृतरूपापन्नं[2] भवति, परिणामे त्वप्रकृतं प्रकृतरूपापन्नं भवतीति वैलक्षण्ये स्थिते यत्तदुपजीव्यत्वकवर्तिनान्यथैव[3] तयोर्वैलक्षण्यं वर्णितम् । मुखचन्द्र इति रूपके मुखं महारजतरूपेण[4] पटवदारोप्यमाणचन्द्ररूपेण स्थगितस्वरूपं भवति । मुखचन्द्रेण तापः शाम्यति' इति परिणामे तु मुखमनाच्छादितस्वरूपमेव भवति । चन्द्रस्य मुखात्मनैव विरहतापशान्तिहेतुत्वादिति । उक्तं च --

'विषय्याकारमारोप्य विषयस्थगनं यथा[5] ।
रूपकत्वं तदा तत्र रञ्जनेन समन्वयः[6] ।।'
'यदा तु विषयो रूपात्स्वस्मादप्रच्युतो भवेत् ।
उपयुक्त्यै तदाकारः परिणामस्तदा मतः ।।' इति ।

अत्रेदं विचारणीयम् । रूपके विषयस्य स्थगनं न तावत्तिरोहितरूपत्वम् । रजतभ्रमेण शुक्तिस्वरूपस्येवाहार्यारोपेण विषयस्य तिरोधानासंभवात् । शारीरके च 'य एवासौ, तपति तमुद्गीथमुपासीत इत्यत्रोद्गीथस्यादित्यदृष्टिविषयत्वांगीकारे रजतदृष्टिविषयशुक्तिस्वरूपमिवोद्गीथक्रियास्वरूपं[7] तिरोधीयेतेत्याशंक्याहार्यदृष्टेरतिरोधायकत्वस्योक्तत्वात् । नापि विषय्युपसर्जनत्वम् । परिणामेऽपि तुल्यत्वात् । उभयत्राप्युत्तरपदार्थप्रधानस्य मयूरव्यंसकादिसमासस्याविशेषात् । अत एव विषयिविशेषितत्वं स्थगनमित्यपि निरस्तम् । विषयिणो विशेष्यत्वात् । तस्मात्स्थगनास्थगनवैलक्षण्यवचो निरालम्बनमिति विषयात्मनोपयोगेनैव परिणामस्य रूपकाद्वैलक्षण्यं समर्थनीयमित्यलं विस्तरेण ।।

इति[8] परिणामप्रकरणम्[9] ।

---

१- वैलक्षण्येन-ख २- प्रकृतं प्रकृतरूपा--ख ३- तदप्युपजीव्य-क,ख
४- महारजन-क, ख,ग ५- यदा-क,ख ६- समन्वतः (?) -क ७- स्वरूप-क
८- इति इति पु० नास्ति ९- चित्रमीमांसायाम् इत्यधिकं क-गयोः

अथ ससंदेह:-

साम्यादप्रकृतार्थस्य या धीरनवधारणा ।
प्रकृतार्थाश्रया तज्ज्ञै: ससंदेह: स इष्यते[१] ।।

त्रिविधश्चायं ससंदेह:[२] । शुद्धो निश्चयगर्भो निश्चयान्तश्च । क्रमेण यथा--

आनीय क्षिणता धनानि विपिने राजन्यचूडामणौ
तेष्वालोक्य विनिर्मलं हिमकलाखण्डं[३] करण्डं पुन: ।
किं वाधं किमु पैणणं किमु धनं किं दोपणीयायुधं
किं वा[४] दैवतमित्यनिश्चितधियो मन्दा: पुलिन्दा जना:॥

"अयं मार्तण्ड: किं स खलु तुरगै: सप्तभिरित:
कृशानु: किं सर्वा: प्रसरति दिशो नैव[५] नियतम्[६] ।
कृतान्त: किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटा: ।।"

किं तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते तरुण्या:[७] ।
संशय्य क्षणमिति निश्चिकाय कश्चि-
द्बिब्बोकैर्बकसहवासिनां[८] परोक्षै: ।।"

इति वदन्ति । अत्रेदं विचारणीयम् । साम्यादिति किमन्नाद्धेतोर्वसतीतिवत्फलत्वेन हेतुत्वविवक्षया पञ्चमी, उत स्वतो हेतुत्वविवक्षया । आद्येऽप्रकृतसाम्याभिव्यक्तिफलकत्वमर्थ: स्यात् । तथा सति आनीय क्षिणताम्" इत्याद्युदाहरणेऽव्याप्ति: । न हि तत्र हिमकरण्डस्य वाधादिसादृश्याभिव्यक्तौ कविसंरम्भ: । किं तु क्षिणत्पुरमीदृशीमवस्थामापन्नमिति राज्ञ: प्रतापातिशयाभिव्यक्तौ । द्वितीये साम्यादित्यनेन किमेकमेवाप्रकृतसाम्यं यावत्संदेहाकोट्युच्छित्तिहेतुत्वेन[९] विवक्षितम्, उतैकमनेकं वेत्यनियम:[१०] । आद्ये "अयं मार्तण्ड: किम्" इत्याद्युदाहरणेऽव्याप्ति: । नहि तत्र "किं लक्ष्मीरुर्वशी वेयं रम्भा वा मेनका वा" इत्यत्र लक्ष्मीत्यादिविक[११]ल्पेष्वतिशयितसौन्दर्यसाम्यवदेकमेव साम्यमिह मार्तण्डत्वादिविकल्पेषु हेतु:

---

१- उच्यते-क २- संदेह:-ख ३- हिमजलाखंड-ख ४- वोदे (?), --क ५- नैष-क,ख
६- नियता:- ख ७- सुवत्या:-क, ख, ग ८- वलसहवासिना-ख ९- कोव्युत्स्थितिहेतुत्वेन क,ख १०- येत्यनियम:-घ ११- लक्ष्मीत्वादि क,ख

किं तु प्रतापेन दुर्निरीक्षत्वसाम्यं[1] मार्तण्डत्वविकल्पे, दुराधर्षत्वसाम्यं कृशानुत्वविकल्पे, [2]क्षणेन सकलसंहर्तृत्वसाम्यं[3] कृतान्तत्वविकल्पे[4] च हेतुः । द्वितीये "इह नमय शिरः कलिंगवद्वा समरमुखे करहाटवद्धनुर्वा" इति विकल्पालंकारेऽतिव्याप्तिः ।

अत्र दिग्विजयप्रवृत्तेन बलवता राज्ञा समरे प्रसक्ते यथा कलिंगनृपतिः--

"समाक्रान्तो बलवता कांक्षन्नप्रंशिनीं[5] श्रियम् ।
श्रयेत[6] वैतसीं वृत्तिं न भौजंगीं[7] कदाचन ।।"

इति नीतिमनुसृत्यासंदिग्धं निजराज्यलक्ष्मीभ्रंशपरिहारकामः शिरो नमितवान्, तथा वा शिरो नमय, यथा करहाटनृपतिः "जयेन लभ्यते लक्ष्मीर्मरणेन सुरांगना[8]" इति नीतिमनुसृत्य युद्धकामो धनुर्नमितवान्, तथा वा धनुर्नमयेति समयोचिताप्तोपदेशे तद्राजचरितदृष्टान्तप्रापितानवस्थिताधीसत्त्वात् । न च तत्र श्लोके तादृग्धी[9]निबन्धनं नास्तीति नातिव्याप्तिरिति वाच्यम् । तन्निबन्धनस्यापि लक्षणान्तर्गतविवक्षायाम्--

"जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः ।
किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः ।।"

इत्यादिषु संदेहविषयनिबन्धनगम्यससंदेहालंकारेष्वव्याप्तिप्रसंगात् । उत्प्रेक्षायां वाच्यगम्यभेदवदिहापि द्विविधोदाहरणदर्शनेन वाच्यगम्यभेदेन द्वैविध्यस्यांगीकर्तव्यत्वात् ।

अपि चानवधारणेति किमुच्यते । अनिश्चयात्मकत्वमिति चेत् । तथा सति "बालेन्दुवक्राण्यविकाशभावात्[10]" इत्यादावुदाहरिष्यमाणायामप्रकृतसाम्यनिमित्त[11]तादात्म्यसंभावनारूपायामुत्प्रेक्षायामतिव्याप्तिः । [12]विरोधेन परस्परप्रतिक्षेपकतया निबद्धानेककोट्यवगाहित्वं विवक्षितमिति चेत् तथापि "अंकं केऽपि शशंकिरे" इत्यादावुदाहरिष्यमाणायामपह्नुताव[13]तिव्याप्तिः । संदेहविकल्पयोर्वाकारादिनेव तत्रापि तदन्यत्वोपन्यासेन[14] परस्परप्रतिक्षेपसिद्धेः ।

---

१- मार्तण्डविकल्पे-क, मार्ताण्डविकल्पे--ख २- क्षणेण इत्यस्य क्षणे इति ख पुस्तके नास्ति, ३- संहर्तृकत्वसाम्यं-ग ४- कृतान्तुविकल्पे-क,ग,घ ५- अप्रशनीं (?) क ६- श्रयते-ख ७- भौजंगी-ख ८- सुरांगना इति ख पुस्तके नास्ति ९- तादधीनि-ख, १०- विकासतोवात्-ख, विकासभावात्-ग ११- निमित्ततादा--ख १२- अथ, संभावनायाउत्कटकोटिसंदेहरूपत्वात् विरुद्धानेककोट्यवगाहित्वं वदिति चेत् तथापि मुखचन्द्र इत्यादि रूपके ऽतिव्याप्तिः इत्यधिकं कपुस्तके १३- मपह्नुतावव्याप्तिः-ग १४- तन्मतत्वोप---क

"अस्या: सर्गविधौ[1] प्रजापतिरभूच्चन्द्रो तु कान्तिप्रद:[2]
श्रृंगारैकरस: स्वयं तु मदनो मासो नु पुष्पाकर: ।
वेदाभ्यासजड: कथं स विषयव्यावृत्तकौतूहलो[3]
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनि: ।।"

इति ससंदेहोदाहरणे नाव्याप्ति: । तत्र चन्द्रादीनां संदेहधर्मिणामेवानेकत्वम् । प्रकारस्तु सर्वत्र वर्णनीय[4]वनिताप्रष्ट्[5]त्वमेकमेवेत्यनेककोटिकत्वाभावात् । न च साम्यनिमित्त[6]त्वाभावान्न तत्र[7] ससंदेह:[8] । "क्वो गता सा क्व गता न जाने गृहं[9] गता मे हृदयं गता वा" इति संदेहो न संग्राह्य इति वाच्यम् । वर्णनीयनायिकाया: कान्त्या चन्द्रसाम्यं[10] सौरभसौकुमार्याभ्यां पुष्पसाम्यं च निमित्तीकृत्य किमस्या:[11] कान्तिनिधानभूतश्चन्द्र: स्वकान्तिसंपदा सृष्टा, उत पुष्पमास:[12] स्वकीयपुष्पसंपदेति संदेहनिबन्धनात् श्रृंगारैकरस: स्वयं तु मदन: इत्यंशस्य श्रृंगारविभ्रम[13]बाहुल्यमात्रपर्यवसायित्वेन किंचित्साम्यनिमित्तत्वाभावेऽपि चन्द्रवसन्तधर्मिकांशयोस्तन्निमित्त[14]त्वानिवारणात् ।

एवं च प्रकृतार्थाश्रयेत्येतदप्ययुक्तम् । उदाहृतसंदेहस्य वर्णनीयनायिकानाश्रयत्वेनाव्याप्तिरिति[15] चेत्, अत्र ब्रूम: ।

"बुद्धि: सर्वात्मनान्योन्याक्षेपि[16]नानार्थसंश्रया ।
सादृश्यमूला वार्थस्पृक्संदेहालंकृतिर्मता[17] ।।"

यद्यप्यन्योन्य[18]प्रतिक्षेपकविरुद्धनानार्थावलम्बनत्वं विकल्पस्याप्यस्ति । तथापि तदर्थानां सर्वात्मना परस्परप्रतिक्षेपकत्वं नास्ति किं तु पक्षे तत्प्राप्तिमनिरुध्य[19] स्वप्राप्तिपक्ष एव स्वपरिपन्थिप्राप्तिप्रतिक्षेपकत्वम् । न हि "व्रीहिभिर्यवैर्वा[20] यष्टव्यम्" इति विकल्पोद्देशे व्रीहयो यवान् यवाश्च व्रीहीन्सर्वात्मना प्रसंगात्प्रतिक्षिपन्ति । तथा सति शास्त्रस्यास्य[21] निर्णायकत्वेनानतुष्ठापकत्वेन चाप्रामाण्यप्रसंगात् किं तु स्वस्वानुष्ठानपक्ष एव । अत एव "व्रीहिभिर्यवैर्वा यष्टव्यम्" इति संदेहेन पृष्टवन्तं प्रति "व्रीहिभिर्यवैर्वा यष्टव्यम्" इति प्रश्नसमाकारमेव वाक्यं निर्णायकं प्रश्नमूलसंदेह[22]निवर्तकमनुष्ठापकं च दृश्यते । प्रश्नवाक्ये वाकार: सर्वात्मना पक्षान्तरप्रतिक्षेपार्थ: । उत्तरवाक्ये पक्षे तत्प्रतिक्षेपार्थ इति विशेषसद्भावात् । एवं विकल्पालंकारोदाहरणेऽपि द्विविधस्यापि[23] नीतिशास्त्रस्य प्रामाण्याद्धुपदिष्टफले-

---

१- सर्गधौ-ख २- कान्तप्रद: ख ३- कौतूहले-ख ४- वर्णनाय ख ५- वनिप्रष्टु--ख
६- साम्यनिमित्त्वात्-ख ७- तत्र इति कखयो: नास्ति ८- संदेह:-क ९- गेहे-क
१०- कान्तिचन्द्रसामो-ख ११- किमस्या:-क १२- पुष्पसमय:-क, पुष्पसमस्वकीय--ख
१३- श्रृंगारविद्रुम (?)-ख १४- स्तनिमित्त-क १५- --नाव्याप्तेरिति-क १६-
अन्योन्यक्षेपि-क १७- --लंकृतिस्तु, सा-क, संदेहालंकार । -ख १८- यद्यन्योन्य--ख
१९- --मनिरुध्य-ग २०- व्रीहियवैर्वा-क २१- अस्य इति क पुस्तके नास्ति २२- प्रश्नमूलक-क २३- द्विविधस्यापि इति क पुस्तके नास्ति

च्छानुसारेणोभयमपि पक्षोऽनुष्ठातुं युक्तमिति शिरोधनुर्नमनयोर्न सर्वात्मना परस्परप्रतिक्षेपकत्वमिति विकल्पालंकारे नातिव्याप्तिः। अपह्नुवोदाहरणे सर्वात्मना परस्परप्रतिक्षेपकत्वेऽपि वाकारार्थस्पर्शाभावान्नातिव्याप्तिः। तत्र हि केचिदन्य इति मतान्तरत्वो[1]पन्यासेन पक्षाणां परस्परप्रतिक्षेपलाभः। न तु वाकारार्थस्पर्शोऽस्ति। उत्प्रेक्षायामपि नातिव्याप्तिः। तत्र[2] ह्युत्कटको-टिके[3] संशयकोट्योः समबलत्वाभावेन वाका[4]रार्थस्पर्शाभावात्। अस्याः सर्ग-विधौ" इत्युदाहरणे परस्परप्रतिक्षेपकानाकोटिसमाश्रयत्वाभावेऽपि तथाभूत-नानाधर्मिरूपार्थसमाश्रयत्वसत्त्वान्नाव्याप्तिरिति सर्वमन[5]वद्यम्।

संदेहालंकारध्वनिर्यथास्मत्कुलकूटस्थवक्षःस्थलाचार्यकृते वरदराजवसन्तो-त्सवे---

"का[6]श्चित्काञ्चनगौरांगीं वीक्ष्य साक्षादिव श्रियम्।
वरदः संशयापन्नो वक्षःस्थलमवैक्षत॥"

अत्र संशयस्य शब्दोपात्तत्वेऽपि तावन्मात्रस्यानलंकारत्वात्।

तदलंकारताप्रयोजकस्य वक्षःस्थले स्थि[7]तैव लक्ष्मीस्ततोऽवतीर्य पुरत-स्तिष्ठतीत्येवं संशयाकारस्य वक्षःस्थलमवैक्षतेत्यनेन व्यंग्यत्वात्संदेहालंका-रध्वनिरत्रेति। यथा--

"दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।
वीक्ष्य बिम्बमनु बिम्बमात्मनः कानि कान्यपि चकार लज्जया॥

इत्यत्र कानि कान्यपीति सामान्यतो निर्दिष्टानुभावविशेषप्रतीत्यर्थं[8] ल-ज्जाशब्दप्रयोगेऽपि तस्याः स्वविभावानुभावाभ्यां रसानुगुणाभिव्यक्तिरूपो ध्वनिः। यद्यपि संशयापन्नः इत्यनेन लक्ष्म्याः पुरो दृष्टायाश्च मध्ये कस्या रूपमधिकमिति संशयाविष्ट इति वा, निःसमाधिकरूपत्वा[9]भिमानिनी लक्ष्मीः[10] पुरत एनां दृष्ट्वा कथं वर्तत इति संशयापन्न इति वा, इयं च[11] व-क्षसि कुत्र निवेशनीयेति संशयापन्न इति वा। बहवः संशयाकारा वक्षः-स्थलमवैक्षतेत्यनेन व्यंग्याः संभवन्ति, तथापि सर्वेषामपि संदेहानां सादृ-श्यमूलत्वाद्व्यतिरेकमूलसंदेहस्याप्यत्र संभवेऽपि कथंचित्सादृश्यमूलत्वात्सं-देहालंकारध्वन्युदाहरणत्वमिति युक्तमेव॥

इति[12] संदेहालंकारप्रकरणम्।

---

१- मतान्तरोपन्यासेन-क २- "हि केचिदन्य इत्युत्कटको"-इत्यधिकं ख पुस्तके ३- संशये इत्यधिकं क पुस्तके ४- वाकारार्थ-घ- ५- सर्वमनवद्यम-ख, सर्वमवदातम-घ ६- कश्चित्-ख ७- स्थिले स्थिले (?) -ख ८---- प्रतीत्यर्थलज्जा--क ६- रूपत्वाभि-मानिनी-ख १०- लक्ष्मा:-ख, ११- च इति क-ख-ग-पुस्तकेषुनास्ति १२-चित्रमीमांसायां (चि० इत्थं प्रदर्शितं ख पुस्तके) इत्यधिकं ख-गयोः।

अथ भ्रान्तिमान्--

कविसंमतसादृश्याद्विषये पिहितात्मनि ।

आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः ।।

पिहितात्मनीत्यनेनारोप्यमाणानुभवस्य स्वारसिकं[1] कविप्रतिभया कल्पनं विवक्षितम् । तस्यैव विषयपिधानसामर्थ्यात् । अतो रूपकादौ नातिव्याप्तिः । [2]उदाहरणम्--

"कपाले मार्जारः पय इति कराँल्लेढि शशिन-

स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।

रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति

प्रभामत्त[3]श्चन्द्रो जगदिदमहो विभ्रमयति[4] ।।"

अत्र लेहनादिप्रवृत्तिपर्यन्तोक्तैः स्वारसिक एव विभ्रमः कविप्रतिभया चन्द्रिकोत्कर्षद्योतनाय निबद्धः ।

क्वचिद्भ्रान्तेरुत्तरोत्तरं पल्लवेन चमत्कारः-

बल्लालक्षोणिपाल त्वदहितनगरे संचरन्ती किराती

कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशंकाकुलांगी[5] ।

कृत्वा श्रीखण्डखण्डं[6] तदुपरि मुकुलीभूतनेत्रा[7] धमन्ती

श्वासामोदानु[8]धावन्मधुकरनिकरैर्धूमशंकां करोति ।।

क्वचिद्भिन्नकर्तृकोत्तरोत्तरभ्रान्तिनिबन्धनेन चमत्कारः ।

शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं[9] चंचरीकै-

स्त्त्रासो[10]ल्लासलोलाः किसलयमनसा पाणयः कीरदष्टाः ।

तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-

रित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ।।"

क्वचिदन्योन्यविषयभ्रान्तिनिबन्धनेन । यथा--

"पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ।

सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति[11] ।।"

---

१- स्वारसिककविप्रतिभया -ख २- उदाहरणम् इति खपुस्तके नास्ति
३- प्रभामतश्चन्द्रो-क, प्रभामर्तश्चन्द्रो-ख ४- भ्रमयति -ख ५- --शंकाकुलांगी-क
६- श्रीखण्ड खण्ड-क ७- --नेत्र--क,ख ८- --मोदानिलात्तैर्मधुकर--ख ९-
चुम्बितु-क १०- स्तत्रासोल्लास-क १२- हर्तुमिच्छति-क,ख

'विस्फूर्तिमत्या कीर्तो ते विधिवैकुण्ठशंकरा: ।
आरोढुं शयितुं वस्तुमाकाङ्क्षन्ति महीतले[1] ।।'

इत्यत्र भ्रान्तिमदलंकारो व्यंग्य: ।

सादृश्यान्यमूलौ संदेहविभ्रमौ[2] ससंदेहभ्रान्तिमदलंकारप्रयोजकौ न भवत: । यथा--

'अमुष्य धीरस्य जयाय साऽसी शरासनज्यां विशिखै: सनाथयन् ।
निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयार्जितान्यपि ।।'

'दामोदरकराघातचूर्णिताशेषवक्षसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नमस्तलम्[3] ।।'

आद्ये दुर्गविजयोद्योगसाहसप्रयुक्त: कीर्तिभ्रंशसंदेह: । द्वितीये गाढमर्मप्रहारकृतचन्द्रविभ्रम इति ।

इति भ्रान्तिमत्प्रकरणम्[4] ।

अथोल्लेखालंकार:--

निमित्तभेदादेकस्य वस्तुनो यदनेकधा ।
उल्लेखनमनेकेन तमुल्लेखं प्रचक्षते ।।

यत्र नानाविधधर्मयोग्यैकं वस्तु तत्तद्धर्मयोगरूपनिमित्तभेदादनेकेन गृहीत्रानेकधोल्लिख्यते स उल्लेख: ।

'कीर्तिगंगाहिमक्ष्माभृदोज: सूर्योदयाचल: ।
शत्रुसेनाब्धिमन्थाद्रिर्गुणरत्नैकरोहण:[5] ।।'

इति मालारूपके एकस्य राज्ञो यशस्वित्वादिधर्मयोगरूपनिमित्तभेदाद्गुणाकरत्वाद्यनेकप्रकारेणोल्लेखनमस्तीति तत्रातिव्याप्तिनिरासायानेकेनेत्युक्तम्[6] । तत्र गृहीतृभेदनिबन्धनं न भवत्यनेकधोल्लेखनमिति नातिव्याप्ति: ।

'विद्याविक्रमसौन्दर्यतपसां निधिमागतम् ।
पश्यन्ति[7] विबुधा: शूरा: स्त्रियो वृद्धाश्च कौतुकात् ।।'

इत्यत्रैकस्य वर्ण्यस्य विद्याद्यनेकधर्मयोगरूपनिमित्तभेदादनेकेन[8] गृहीत्रो-

---

१- महीतले इति स पुस्तकेनास्ति २- संदेहभ्रान्ति--क--३- नभस्तलं-क ४- चित्रमीमांसायाम् इत्यधिकं गपुस्तके ५- गुणरत्नाधिरोहण:-क,ख६- नेकेनेत्युक्तम्-ग ७- अपश्यन्-क ८- रूपद्वय-क

ल्लेखनमस्तीति तत्रातिव्याप्तिवारणायानेकधेत्युक्तम् । तत्र कौतुकात्स्वरूपाव[1]-लोकनमात्रनिबन्धनं नानेकधो[2]ल्लेखनमिति तट्टीकावृत्तिः । शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं[3] चञ्चरीकैः इत्युदाहृतायामनेककर्तृकभ्रान्तिपरम्परायां स्तनादीनां मञ्जरीसादृश्यादिनिमित्तभेदादनेकेन चञ्चरीकादिना मञ्जरीत्वाद्यनेकप्रकारेणोल्लेखनमस्तीति तत्रातिव्याप्तिवारणायैकस्य वस्तुन इत्युक्तम् ।

कीर्तौ विस्फूर्तिमत्यां ते मृणालदीरशंकिनः ।
द्वयेऽपि नागास्तन्वन्ति जिह्वान्तोल्लेखनं[4] मुहुः ।।

इति भ्रान्तिमदुदाहरणे[5] एकस्या एव कीर्तेरनेकेन कुञ्जरभुजंगरूपेण गृहीत्रा मृणालदीररूपत्वाद्यनेकप्रकारे[6]णोल्लेखनमस्तीति तत्रातिव्याप्तिनिरासाय निमित्तभेदादित्युक्तम् । तत्र कीर्तिगतं धावल्यमेकमुल्लेखद्वयेऽपि निमित्तम् । यद्यपि गजभुजंगानां स्वस्वप्रियाहारलोभरूपनिमित्तभेदोऽप्यस्ति, तथापि निमित्तभेदादित्यनेनैकनिमित्तविरहो विवक्षित इति तद्व्याख्यावृत्तिः[7] । तस्य संग्राह्यत्वे[8] निमित्तभेदादिति स्वरूपकथनमात्रम् । एवमपि यदि---

कान्त्या चन्द्रं विदुः केचित्सौरभेणाम्बुजं परे ।
वक्त्रं तव वयं ब्रूमस्तपसैक्यं गतं[9] द्वयम् ।।

इत्यपह्नवोदाहरणविशेषेऽतिव्याप्तिः शंक्या, तदानीमनेकधोल्लेखनं निषेधास्पृष्टत्वेन विशेषणीयम् । तत्राद्योल्लेखनद्वयं परमतत्वोपन्याससामर्थ्याद्गम्यमाननिषेधमिति नातिव्याप्तिः ।[10]

[11]स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ।

अत्र चानेकधोल्लेखने रुच्यर्थित्वभयादिकं यथायोगं प्रयोजकम् ।। रुचिरभिरतिः, अर्थित्वं लिप्सा । द्विविधश्चायमुल्लेखः शुद्धोऽलंकारान्तरसंकीर्णश्च । तत्र शुद्धो यथा--

[12]गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः ।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ।।

अत्र यस्तथा भीतं मत्तं गजं त्वरया त्रायते स्म सोऽयमादिपूरुष इति

---

१- स्वरूपालोक--क,ख,ग २- नानेकधो-घ ३- चुम्बितुं-क ४- जिह्वान्तोल्लोलनं-क, जिह्वान्तोल्लिखन-ख, ५- मदुदाहरणे इत्यारभ्य निरासाय (पर्यन्तो), इत्यन्तं ख पुस्तकेनास्ति ६- रूपत्वानेक-क ७- व्याख्यावृ तस्य --ख ८- अथ इत्यधिकं सपुस्तके ६- गतद्वयम-ख १०- उदाहरणम् इत्यधिकं कपुस्तके ११- स्त्रीभिः इत्यारभ्य सः इत्यन्तं सपुस्तकेनास्ति १२- जगत्त्रातेति-ख

वृद्धाभि: संसाराद्भीत्या[1] तद्भयार्थिनीभि: कृष्ण: पुर:[2] प्रविशन्[3] दृष्ट: यस्तथा चपलत्वेन प्रसिद्धाया लक्ष्म्या अपि कामोपचारवैदग्ध्येन नित्यवल्लभः सोऽयं दिव्यस्त्रुवेति युवतीभि: सोत्कण्ठाभिर्दृष्ट:, बालाभिर्बालस्वभावाद्यथास्थितरूपवेषयुक्तो दृष्ट इति सर्वत्र वस्तुसता[4] नानारूपेणोल्लेखादयं शुद्ध: ।

यथा वा हर्षचरिते श्रीकण्ठजनपदवर्णने--

"यस्तपोवनमिति मुनिभि:, कामायतनमिति वेश्याभि:, संगीतशालेति लासकै:, यमनगरमिति शत्रुभि:, चिन्तामणिरित्यर्थिभि:, वीरक्षेत्रमिति शस्त्रोपजीविभि:, गुरुकुलमिति विद्यार्थिभि: गन्धर्वनगरमिति गायकै:,[5] विश्वकर्ममन्दिरमिति विज्ञानिभि:, लाभभूमिरिति वैदेहकै:, धूर्तस्थानमिति वन्दिभि:, साधुसमागम इति सद्भि:, वज्रपञ्जरमिति शरणागतै:, विटगोष्ठीति[6] विदग्धै:, सुकृतपरिणाम इति पथिकै:, असुरविवरमिति वाहिकै:,[7] शाक्याश्रम[8] इति शमिभि:, अप्सर:पुरमिति कामिभि:, महोत्सवसमाज इति चारणै:, वसुधारेति च विप्रैरगृह्यत ।"

अत्र तपोवनादिभूयिष्ठत्वात्तपोवनाद्युल्लेख:[9] शुद्ध: । अत्रैव यमनगरत्वाद्युल्लेख: संकीर्ण: । तत्र यदि यमनगरत्वादीनामुपरञ्जकतामात्रेणान्वयस्तदा रूपकसंकर: । यदि ताद्रूप्यानुभावगोचरतया, तदा भ्रान्तिमत्संकर: । अयं चोल्लेखो वर्ण्यगुणोत्कर्षख्यापनायाचेतनकर्तृकोऽपि निबध्यते । यथा तत्रैव हर्षवर्णने--

"नि:स्नेह इति घनै:, अनाश्रयणीय इति दोषै:, निग्रहरुचिरितीन्द्रियै:, दुरुपसर्प इति कलिना, नीरस[10] इति व्यसनै:, भीरुरित्ययशसा,[11] दुर्ग्रह-चित्तवृत्तिरिति चित्तभुवा, स्त्रीपर इति सरस्वत्या, षण्ढ इति परकलत्रै:, काष्ठामुनिरिति[12] यतिभि:, धूर्त इति वेश्याभि:, विनेय[13] इति सुहृद्भि:, कर्मकर इति विप्रै:, असहाय इति शत्रुयोधै:, एकमप्यनेकधा गृह्यमाणम्[14] इति ।

---

१- भीत्य-क २- पुरं-क,ख ३- प्राविशन-क ४- वस्तुसंतानरूपोल्लेखादयं-ख ५- गा विश्व-ख ६- वीरगोष्ठीति-ख ७- वादिकै:-क,ख ८- शक्याश्रम-घ ९- --भूयिष्ठत्वादुल्लेख: शुद्ध: -क १०- निरस इति-ख ११--- त्यपयशसा-ग १२- काष्ठमुनि-क,ख,ग १३- नेय-क,ख विनय-घ १४- एकमप्यनेकैर्गृह्यमाणम्-ख

भ्रान्तिमदलंकारादयोऽप्येवमचेतनकर्तृका निबध्यन्ते--

"भिन्नेषु रत्नकिरणैः किरणेष्विवेन्दो-[१]

रुच्चावचैरुपगतेषु सहस्रसंख्याम् ।

दोषापि नूनमहिमांशुरसौ किलेति

व्याकोशकोकनदतां दधते नलिन्यः[२] ॥" इत्यादौ ।

"मधुलुब्धा मधुकरास्तृषिताश्च चकोरकाः ।

सुगन्धि कान्तिसंपन्नमनुधावन्ति ते मुखम्[३] ॥"

इत्यत्रोल्लेखो व्यंग्यः । विद्याविक्रमसौन्दर्यं इति श्लोके विद्यादीनां स्वरूपावलोकनकौतुकमात्रे निमित्ततया यदि न विश्रान्तिः, किंतु विद्वत्ताद्युल्लेखवदवलोकनकौतुकनिमित्ततायां पर्यवसानं तदा तत्राप्युल्लेखनगतानेकधात्वविच्छित्तिविशेषस्य[४] गम्यत्वादुल्लेखालंकारो गम्यः ।

"परिव्राट्कामुकशुनामेकस्यामेव योषिति ।

कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥"

इत्यत्राप्युल्लेख इष्यत इति लक्षणस्य नातिव्याप्तिः ।

अथापर उल्लेखप्रकारः-

"गृहीतृभेदाभावेऽपि[५] विषयाश्रयभेदतः ।

एकस्यानेकधोल्लेखमप्युल्लेखं प्रचक्षते ॥"

तत्र विषयभेदादनेकधोल्लेखः शुद्धः संकीर्णश्च । शुद्धो यथा---

"अकृशं कुचयोः कृशं वलग्ने[६] विपुलं चक्षुषि विस्तृतं नितम्बे ।

अधरेऽरुणमाविरस्तु[७] चित्ते करुणाशालिकपालिभागधेयम् ॥"

"गुरुर्वचसि, पृथुरुरसि, विशालो मनसि, जनकस्तपसि, सुमित्रस्ते-[८]जसि, सुमंत्रो[९] रहसि, बुधः सदसि, अर्जुनो यशसि, भीष्मो धनुषि"

इत्यादौ श्लेषसंकीर्णः ।

"हंसमयीव गतिषु, परपुष्टमयीवालापे,[१०] चक्रवाकमयीव[११] पतिप्रेमणि, प्रावृण्मयीव[१२] पयोधरोन्नतौ, कमलमयीव कोशसंग्रहेषु, कुसुममयीव फलदानेषु इत्याद्युत्प्रेक्षासंकीर्णः । पयोधरोन्नतावित्यादौ विषयांशे श्लेषसंकीर्णश्च । युधिष्ठिरः सत्यवचसि" इत्यादौ रूपकसंकीर्णः ।

"युधिष्ठिरसमः सत्यवचसि इत्यादावुपमासंकीर्ण इत्याद्यून्नेयम् ।

---

१- ष्विहेन्दो-क, ग २- इत्यादौ इत्यधिकं क-ख-गपुस्तकेषु ३- सपन्न-घ
४- अनेकधात्वकृतः (?)-क ५- गृहीतृ-घ ६- विलग्ने-क,ख ७- अरुणाधरमाविरस्तु-क,ख
८- जामकः-ख ९- संमतो क,ख १०---वालापेषु-क,ख ११- चक्रवाकमयि(?)-ख
१२- प्रावृणमयीव-ख, प्राविण्मयीव-घ

अधिकरणभेदेनानेकधोल्लेखो यथा--

"वर्धिष्णोरुपरि क्षणं रविरभूच्छत्रं बलिध्वंसिनो
रत्नं मूर्ध्नि ललाटसीम्नि तिलकं कर्णान्तिके कुण्डलम् ।
अंसे चक्रपुर:स्थले मणिवरो नाभौ सरोजासनो
यस्यांघ्रौ कटकस्त्रिविक्रमगते: पायादपायात्स व: ।।"

अत्र रूपकसंकीर्ण: । भगवल्ललाटमध्यकर्णान्तादि[1]तत्तदवयवाभिमुख-स्थितगृहीतृभेदनिमित्तोल्लेखसंकीर्णश्च । एकस्यैव द्रष्टुर्ललाटमध्ये कर्णान्तिके च रविदर्शनासंभवात् ।

"यस्य वह्निमयो हृदयेषु,जलमयो लोचनपुटेषु[2], मारुतमय: श्वसितेषु, क्ष्माम[य]ोऽङ्गेषु, आकाशमय: शून्यतासु , पञ्चमहाभूतमयो मूर्त इवादृश्यत निहतप्रतिसामन्तान्त:पुरेषु प्रताप: ।"

अत्र वह्निजलादिशब्दगृहीततापबाष्पादि[3]रूपाणां प्रतापकार्याणां प्रतापस्य चाभेदकथनं हेत्वलंकार इति तत्संकर:।मतान्तरे रूपकसंकर: ।

"कस्तूरीतिलका[4]दि भालफलके, देव्या मुखाम्भोरुहे
रोलम्बन्ति[5], तमालबाल[6]मुकुलोत्तंसन्ति मौलिं प्रति ।
या: कर्णे विकचोत्पलन्ति, कुचयोरंसे[7] च कालागुरु-
स्थासयन्ति, प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विष: ।।"

अत्रोपमासंकीर्ण: । केचित् तत्तदधिकरणौचित्यात्[8]कस्तूरीतिलकादि-तादात्म्यसंभावनायामुपमार्थे[9] विहितोऽपि[10] क्विबुत्प्रेक्षायां[11] पर्यवस्यतीत्युपमो-पक्रमोत्प्रेक्षेयमित्याहु:।तन्मते उत्प्रेक्षासंकीर्ण: । एवमलंकारान्तरसंकरो-ऽप्युन्नेय: ।

इत्युल्लेखप्रकरणम्[12] ।

अथापह्नुति:-

प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम् ।
साम्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा ।।

[13]अन्यत्वकल्पनमात्रं रूपके, विषयनिषेधमात्रं "नाहं दूती वरतनोरंग-

---

१- कर्णान्तिकादि-क २- लोचनपुटेषु-क, ३- बाष्पादिभ(राणां)-क,ख ४- कस्तूरीतिलकन्ति-क ५- लोलम्बन्ति-ख ६- बालमुकुल-क,ख ७- कुचयोरसि-क,ख,ग, ८- --धिकरणौचित्ता कस्तूरी-क ९- उपमार्था-ख १०-विहितापि-ख ११- अत्र इत्यधिकं क-खयो: १२- चित्र मीमांसायाम् इत्यधिकं गपुस्तके १३- प्रकल्पन -क

तापोऽति भास्वर:[1]" इत्यादौ पे, उभयमपि साम्यविशेषणरहितम् । "न पञ्च-विशिख: काम: किं त्वपञ्चशिलीमुख:[2]" इत्यतिशयोक्तौ चातिव्याप्तमिति विशिष्टोपादानम्[3] । न चैवं[4] "न पद्मं मुखमेवेदम्" इति तत्त्वाख्यानोपमाया विषये[5] पद्मत्वनिषेधस्य मुखत्वप्रकल्पनस्य च सत्त्वादतिव्याप्ति:[6] । प्रकल्पन-पदस्यारोपपरत्वात् । "निषिध्य[7] विषयं साम्यादन्यारोप:" इति त्वाप्[8]प्रत्यये-येन लक्षणं नोक्तम् । वक्ष्यमाणोदाहरणे आरोपपूर्वकापह्नवेऽव्याप्ति[9]-प्रसंगात् ।

इयं च साक्षान्निषेधकनञादिप्रयोगे परपदात्वाद्युपन्यासे निषेधसा[10]मार्थ्याद् गम्यत्वे च वाक्यभेदेन प्रवर्तते । विषयासत्यत्वप्रतिपादकच्छद्मनिभक-पटव्याजादिशब्दप्रयोगे विषयासत्यत्वपर्यवसायिरूपवपुर्नामिभंग्यादि शब्द-प्रयोगे च तदभेदेन ।

अत्र[11] वाक्यभेदेऽपह्नवपूर्वक आरोप आरोपपूर्वकापह्नवश्चेति द्वैविध्यम् ।

क्रमेणोदाहरणानि---

"अवाप्त: प्रागल्भ्यं परिणतरुच: शैलतनये
कलंको नैवायं विलसति शशांकस्य वपुषि ।
अमुष्येयं[12] मन्ये विगलदमृतस्यन्दशिशिरे[13]
रतिश्रान्ता[14] शेते रजनिरमणी गाढमुरसि ।।

यथा वा---

"नेदं नभोमण्डलमम्बुराशिर्नैताश्च[15] तारा नवफेनभंगा: ।
नायं शशी कुण्डलित: फणीन्द्रो नायं कलंक: शयितो मुरारि: ।।"

पूर्वत्र निरवयवापह्नुतिरत्र सावयवेति भेद: ।

"अंकं केऽपि शशंकिरे[16] जलनिधे: पंकं परे मेनिरे
सारंगं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे ।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ।।"

इत्यत्राप्यप[17]ह्नवपूर्वक आरोप: । अपह्नवस्तु परपदारोपन्यासादर्थसिद्ध: ।

---

१- भास्कर (?)-क २- त्वसंख्यशिली-क ३- निविष्टोपादानम्-ख ४-एवमपि-क-ख,ग ५- विषय-क,ख ६- अव्याप्ति:-- ख-७- निषिद्ध (?) ख ८- इति तु-क ९- अतिव्याप्ति-घ- १०- निषेधसामर्थ्यादि-घ ११- तत्र-क,ख १२- मन्य-ख १३-दमृतस्यन्दिशिशिरे-क,ख १४- रति:शान्ता-ख १५- --राशिर्नैताश्च-क,ख,ग १६- अस्य श्लोकस्य शशंकिरे इत्येतत्पर्यन्तमेव उद्धृतम् खपुस्तके १७- इत्यत्रापह्नव-क

'विकसदमरनारीनेत्रनीलाब्जषण्डा-
न्यधिवसति सदा यः संयमाधः-कृतानि ।
न तु रुचिरकलापे वर्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं[1] वः ।।'

अत्रारोपपूर्वको[2]ऽपह्नवः शाब्दः ।

'मन्थानभूमिधरमूलशिलासहस्र-
संघट्टनव्रणकिणः स्फुरतीन्दुमध्ये ।
छाया मृगः शशक इत्यपि पामराणां[3]
लोके गतानुगतिकः प्रथितः प्रवादः ।।'

अत्राप्यारोपपूर्वकोऽपह्नवः । स च[4] पामरवचनोपन्यासादर्थसिद्धः । एतानि वाक्यभेदेनोदाहरणानि । एकवाक्यतायां तु-

'बत सखि कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन्कामिलोके तथा हि ।
उपवनसहकारोद्भासिभृंगच्छलेन[5]
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ।।'

'अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः[6] पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ।।'

पूर्वत्र न सभृंगाणि सहकाराणि, अपि तु सकालकूटाः शरा इत्यस[7]त्यत्वाभिधायिच्छलशब्दवशात्प्रतीयते । उत्तरत्र नेयं रोमावलिः किं तु धूमशिखेत्यसत्यत्वपर्यवसायि[8]वपुःशब्दबलात्प्रतीयते ।

केचित्तु सादृश्यव्यक्तये[9]ऽपह्नववदपह्नवाय सादृश्यमप्यपह्नुत्यलंकारं वदन्ति । यथाहुः -

'सादृश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः ।
अपह्नवाय सादृश्यं यत्रास्त्येषा[10]प्यपह्नुतिः ।।' इति ।

---

१- ब्रह्मचर्यः श्रियेव: -क२- इत्यादारोप-क- ३- इत्यतिपामराणां-कग
४- सतु-क,ग, अपह्नवस्तु-ख ५- राद्भावसि भृंग-ख ६- सर्वप् लुष्टः-ख
७- इत्यसत्वाभिधाभि-क ८- --त्यसत्वपर्य--ख,घ-९- व्यक्त येपह्नव-क
१०- यत्रास्तेणाप्य-क

उदाहरन्ति-च-

[१] आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे
कण्ठे लग्नः सुकण्ठः प्रसरति कुचयोर्दन्त[२]गाढाङ्गसङ्गः ।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यः [३] स तादृक्प्रियो मे
बाले लज्जा निरस्ता न हि न हि सरले चोलकः किं त्रपाकृत् ॥

[४] अत्र विवक्षितं प्रियमपह्नुत्य चोलकत्वारोपः । [५] तदर्थं च प्राक् प्रियचोलसदृशधर्मोपन्यासः । अत्रेदमपह्नुतिकथनं व्याजोक्त्यलंकारं पृथगनङ्गीकुर्वतामुद्भटादीनां मतमनुसृत्य । ये तु उद्भिन्नवस्तुनिगूहनं व्याजोक्तिरिति व्याजोक्त्यलंकारं पृथगिच्छन्ति [६] तेषामिहापि व्याजोक्तिरेव नापह्नुतिरिति रुचकादयः । दण्डी त्वपह्नुतेः साधर्म्यमूलत्वनियममनादृत्य "किञ्चिदपह्नुत्य कस्यचित्प्रदर्शनमात्रमपह्नुतिः" इति लक्षयित्वोदाजहार--

"अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् ।
न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ।।
चन्दनं चन्द्रिका मन्दो [७] गन्धवाहश्च दक्षिणः ।
स्वयमग्निमयी सृष्टिः [८] शीता किल परान्प्रति ।।
अमृतस्यन्दिकिरणश्चन्द्रमा मम नो मतः ।
अन्य एवायमर्कात्मा विषनिष्यन्द[९]दीधितिः ।।"

साधर्म्यमूला त्वपह्नुतिः उपमापह्नुतिरिति [१०] तेन व्याहृता [११] ।

"त्वदालेख्ये कौतूहलतरलतन्वी विरचिते
विधायैका चक्रं रचयति [१२] सुपर्णासुतमपि ।
अथ स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ।।"

इत्यादावपह्नुतिध्वनिरुदाहर्तव्यः । अत्र हि चक्रसुपर्णलेखनेन नायं साधारणः पुरुषः किं तु पुण्डरीकाक्ष इति कयाचिद्[व्यञ्जि]सूचितम् । अन्यथा तु तस्याप्येतादृशं रूपं न संभवतीत्याशयेन नायं पुण्डरीकाक्षोऽपि किं तु मन्मथ इति तदुभयमुन्मृज्य [१३] पुष्पसायकमकरध्वजलेखनेन व्यञ्जितम् ।।

[१४] इत्यपह्नुतिप्रकरणम् ।

---

७२- --ष्यासावमन्द--क २- दन्तगाढा--घ ३- यः सा-ख, ग, ४- वीक्षितं ग,घ ५- तर्थनद च -ख ६- तेषामपि क-७- मन्दो-क,ख ८- दृष्टिः-ख ९- निष्यन्दि--ख,ग १०- उपमापन्हुतिः इति ख-ग-घपुस्तकेषु नास्ति, ११-व्यवहृता क-ख,ग १२- विपति-ख १३- अपमृज्य-ख,ग १४- चित्रमीमांसायाम् इत्यधिकं ख-गपुस्तकयोः

अथोत्प्रेक्षालंकार:-

यत्रान्यधर्मसंबन्धादन्यत्वेनोपतर्कितम् ।

प्रकृतं हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते ।।

यथा---

"बालेन्दुवक्राण्यविकाश[१]भावाद्बभु: पलाशान्यतिलोहितानि ।

सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ।।"

अत्र प्रकृतानि पलाशकुसुमा[२]न्यप्रकृतनखक्षतधर्मवक्रत्वलौहित्यसंबन्धा-न्नखक्षतत्वेनोपकल्पितानि[३] । तर्क: संभावनामात्रं न त्ववधारणम् । तदीयधर्मो हि तत्तादात्म्यसंभावनामात्रहेतुर्न व्याप्तिपक्षधर्मता[४]वल्लिंगवदवधारणहेतु: । न चात्रेवशब्दस्य सादृश्यपरत्वमित्युपमाशंका कार्या । उपमाया यत्र[५] क्वचित्स्थितेऽपि नखक्षतै: सह वक्तुं शक्यतया वसन्तनायकसमागतवनस्थलीसंबन्धित्व[६]विशेषणकल्पनानपेक्षत्वात् । पलाशमुकुलानां नखक्षततादात्म्यसंभावनायामेव तथाविधविशेषणस्योपयुक्तत्वात् । एवमन्यत्रापि यत्र यत्राप्रकृततादात्म्यसंभावनोपयुक्त[७] विशेषणकल्पना तत्र सर्वत्राप्युत्प्रेक्षावगन्तव्या । यथा---

"उवाह या तनुलता मृणालीरोम*वल्लरीम् ।

पश्चाद्विमुक्तां वैमल्याद्बिम्बितामिव वेणिकाम् ।।"

उपमा यत्र क्वचित्स्थितयापि वेणिकया तु वक्तुं शक्येति तत्रानुपयुक्ता, वैमल्यात्पुरोभागप्रतिबिम्बितत्वरूपविशेषणकल्पना[८] तादात्म्यसंभावनायां[९] । यत्र तु संभावनोपयुक्तविशेषणकल्पनारहितमुपमानं निबध्यते तत्र परमिवशब्द: सादृश्यपर इत्युपमालंकार: । अमुमेव विभागमभिप्रेत्य चक्रवर्तिनोक्तम् "यदायमुपमानांशो लोकत: सिद्धिमृच्छति" इत्यादि । दण्डिनापीवशब्दस्योत्प्रेक्षा व्यंजकत्वमुक्तम्[१०] ।

"मन्ये, शंके, ध्रुवं, प्रायो, नूनमित्येवमादिभि: ।

उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश: ।।" इति ।

अत्रादिशब्देन तर्कयामि[११], संभावयामि[१२], जाने उत्प्रेक्षे, स्यात्, इत्येवमादीनां संग्रह: । अत्र च

---

१- विकास-क,ख,ग २- मुकुलानि-क,ख,ग ३- --नोपलक्षितानि-क,ख,ग
४- धर्मतालिंगवदवधार--क ५- अत्र-ख ६--- सम्बन्धित्व-ख ७- नोपयुविशेषण-ख
८- विशेषणफलकल्पना -क ९- --संभावनायाय-ख १०- युक्तम्-ख,घ
११- संभावयामि-क १२- तर्कयामि-क
* - रोमवल्लरीम्- ध.

"कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय ।
यदि पुनरहं विधि: [1]स्यां खलजिह्वायां निवेशयिष्यामि ।।"

"[2]अयमुष्णो भवेद्वन्हिर्यदि शीतं भवेज्जलम् ।
मन्ये [3]दृढव्रतो रामस्तदा स्यादप्यसत्यवाक् ।।"

इत्यादिष्वतिव्याप्तिवारणाय धर्मसंबन्धादित्युक्तम् । तेषु हि "यद्यर्थोक्तौ च कल्पनम्" इत्यतिशयोक्त्यलंकारविषयेषु, संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये" इति संभावनालंकारविषयेषु वा निर्निमित्तमेव तथा तर्कोपतर्कणम् । तथापि----

"सर्वातिशायिसौन्दर्यं [4]शङ्के सत्यवतो मुखम् ।
येन सा मृगशावाक्षी [5]सावित्री तरलीकृता ।।"

इत्यादिष्वतिव्याप्ति: स्यादिति तद्वारणायान्यधर्मसंबन्धादित्युक्तम् । तत्र [6]सावित्रीहृदयतरलीभावकारकत्वादिना स्वधर्मेणैव वितर्कणमिति नातिव्याप्ति: ।

"विरक्तसंध्यापरुषं [7]पुरस्ताद्[8]यतो रज: पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्ति: प्रत्युद्गतो मां भरत: ससैन्य: ।।"

इत्यत्रातिव्याप्तिवारणायान्यत्वेनेति विशेषणम् । तत्र [9]ससैन्ये प्रत्युद्गन्तर्यन्यत्रापि दृष्टस्याग्रे[10]रजोगमनस्य संबन्धेन निमित्तेन भरत: प्रत्युद्गतत्वेन वस्तुसद्रूपेणै[11]वोपतर्कितो न त्वन्यत्वेनेति नातिव्याप्ति: ।

"नरसिंहमहीपाल [12]विद्वस्त्वां मकरध्वजम् ।
मार्गणास्तव संजाता: कथं सुमनसोऽन्यथा ।।"

इत्यत्रातिव्याप्तिवारणायोपतर्कितमित्युक्तम् । तत्रानुमानालंकारविषये सुमनोमार्गणत्वेन मन्मथत्वव्या[13]प्तिलिङ्गेन राज्ञि मन्मथत्वमवधृतं न संभावनामा[14]त्रम् ।

"इन्दुर्लि[15]प्त इवाञ्जनेन ज[16]डिता दृष्टि[17]र्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमप्रभा ।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीताया: पुरतश्च हन्त शिखिनां बर्हा: सगर्हा इव ।।"

---

१- स्या:-ख २- वायु:-ख ३- दृढव्रतो-ख ४- सौशके-ख ५- गायत्री-ख
६- गायत्रीहृदय-ख ७- --कापिश-क ८- यथा-क,ख,ग ९- ससैन्यं-क
१०- रजोभरोदग्मनस्य-क,ख,ग ११- तर्कितो-क १२- विद्मस्त्वा-क १३- व्याप्त-क १४- मात्रपदम्-क,ख,मात्रपरम्-ग १५- इन्दुलिप्त-ख १६- जसिता-ख
१७- दृष्टी--ख

इत्यत्रातिव्याप्तिवारणाय प्रकृतमित्युक्तम्[१]। तत्र निरतिशयसौन्दर्यसीतावदनादिसंनिधानेन तद्वदनाद्युपमानेष्वपि[२] निकर्षापादकेन प्रशस्तोपमानेष्विन्द्वादिष्वप्रकृतेष्वञ्जनलेपादिनिकर्षसंभावना क्रियत इति नातिव्याप्तिः। नन्वेवमपि---

'अस्मद्विक्रमचेष्टितानि निखिलत्रैलोक्यहेलाजय-
प्रह्वीभूतसुरासुराणि भवती भूमेः सुता शृण्वती।
पत्यौ द्वैणकषायितेन मनसा स्निग्धा मयि स्यास्यति
स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम्॥'

इत्यत्र चाञ्चल्यसहचरितत्वेनान्यत्र दृष्टस्त्रीत्वस्य[३] संबन्धेन निमित्तेन वस्तुतः पत्येकस्थिरचित्ता[४] देवी सीता चञ्चलत्वेनोपतर्किता। न च तत्रोत्प्रेक्षालंकारः। रावणकृततदीप्सितसंघटनानुकूल[५]विचारमात्रस्य निबद्धत्वेन विच्छित्तिविशेषाभावात्। न चान्यधर्मसंबन्धादित्यत्र धर्म उपमायामिव सहृदयहृदयाह्लादी विवक्षितः, न तु साधारणधर्ममात्रम्। तथा च नोक्तातिव्याप्तिः। स्त्रीत्वादेश्चाञ्चल्यादिसंभावनामात्रप्रयोजकत्वेऽपि[६] सहृदयहृदयाह्लादिसाधारणधर्मभावेनोपमालंकारप्रयोजकत्वाभावादिति[७] वाच्यम्। तथापि[८]

'स्तनाभिरामस्तबकां नूनं सीतेति बल्लरीम्।
संभावयन्रघुपतिर्धावति[९] स्म दिदृक्षया॥'

इत्यत्रातिव्याप्तेरवारणात्। न चाहार्यत्वं तर्कविशेषणम्[१०]। इह त्वनाहार्या संभावनेति वाच्यम्। तथा सति 'शङ्के हनूमत्कथितप्रवृत्तिः[११]' इति संभावनाया अप्यनाहार्यत्वेन तद्व्यावृत्त्यर्थस्यान्यत्वेनेत्यस्य वैयर्थ्यप्रसंगादिति चेत्, मैवम्। अन्यत्वेनेत्यस्यान्यत्वेनावगतपरतया तस्यैवाहार्यत्वविशेषणपर्यवसायित्वात्।

ननु तथापि नैतल्लक्षणम्, अव्याप्तेः। तथा हि यत्र स्वमात्रधर्मादन्यमात्रधर्माद्वा किञ्चिदुत्प्रेक्ष्यते तत्रान्यधर्मसंबन्धादिति लक्षणांशाभावादव्याप्तिः[१२]। यथा---

'अंगुलीभिरिव केशसञ्चयं संनियम्य[१३] तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी॥'

---

१- उपतर्कितम्-ख घ, २- दृशुपमानान्तरेष्वपि-क,ख ३- दृष्टस्यस्त्रीत्वस्य-ख
४- प्रत्येकस्थिरचित्ता-घ ५- संघटनानु-ग ६- संभावनप्रयोजक-ख ७- साधारणधर्माविभावेनोत्प्रेक्षालंकार-क ८- तथासति क,घ ९- संभावयन् घुपति--ख १०- तर्क विशेषणम्-क,ख ११- हनुमत्-ख १२- भावादित्यव्याप्तिः-ख १३- संनिगृह्य-क,ग

'भूयस्तराणि मदमूनि तमस्विनीषु

ज्योत्स्नीषु[1] च प्रविरलानि ततः प्रतीमः ।

संध्यानलेन भृशमम्बरमूषिकाया-

मावर्तितैरुडुभिरेव कृतोऽयमिन्दुः ॥'

इत्यत्राद्योदाहरणे[2]ऽलीसदृशीभिर्मरीचिभिः केशसंचयसदृशस्य तिमिरस्य ग्रहणात्स्वमात्रधर्मादेव शशिनश्चुम्बनमुत्प्रेक्षितम् । द्वितीये ताराविरलत्वाविरलत्वरूपेणान्यमात्रधर्मेण चन्द्रस्य संध्यानलमध्यगाम्बर[3]मूषिकावर्तिततारानिकरनिर्मितत्वमुत्प्रेक्षितम्[4] । किं च हेतुफलधर्मस्वरूपोत्प्रेक्षास्वन्यत्वेनेति लक्षणांशाभावादव्याप्तिः[5] । यथा---

'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।

अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥'

इति हेतूत्प्रेक्षोदाहरणे नूपुरगतेन दुःखिसाधारणेन[6] मौनित्वेन निमित्तेन नूपुरे तद्धेतुभूतदुःखमेव धर्मतयोत्प्रेक्ष्यते, न तु दुःखितादात्म्यम्[7], दुःखशब्दस्योपरि मतुबाद्यश्रवणात्[8] । एवम्---

'चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।

अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि[9] ॥'

इति फलोत्प्रेक्षोदाहरणे द्रुमगतेन ललाटाक्षरदर्शनप्रवृत्तपुरुषसाधारणेन ललाटपाटनेन[10] निमित्तेन द्रुमाणां तत्फलं ललाटाक्षरदर्शनमुद्देश्यमिति धर्मतयोत्प्रेक्ष्यते न तु ललाटाक्षरदर्शनप्रवृत्तधर्मितादात्म्यम्, द्रष्टुमित्यस्य[11] धर्मिपर्यन्तत्वाभावात् । तथा[12]---

'पिनष्टीव तरंगाग्रैः समुद्रः फेनचन्दनम् ।

तदादाय करैरिन्दुर्लिम्पतीव दिगंगनाः ॥'

इति धर्मस्वरूपोत्प्रेक्षोदाहरणे समुद्रस्य चन्दनघर्षणशिलाप्रान्तस्थानीये[13] तटे हस्तस्थानीयतरंगाग्रैः फेनचन्दनपेषकत्वेन शशांकस्य करैर्दिगंगनादिधवलीकरणेन च प्रतीयमानेन निमित्तेन तत्कर्तृकं पेषणलेपनमात्रमुत्प्रेक्ष्यते, न तु तयोः पेषणलेपनकर्तृतादात्म्यम् । पिनष्टि लिम्पतीत्याख्यातयोः कर्तृवाचकत्वेऽपि 'भावप्रधानमाख्यातम्' इति न्यायेन कर्तुः प्रधानभूतक्रियोपसर्जनस्यान्यत्रान्वयासंभवात् । अत एव 'लिम्पतीव तमो--

---

१- ज्योत्स्नासु-ख २- इत्यत्राद्योदा-क ३- सज्यानलमध्यमावर(?) ख-
४- --निकरनिर्मितत्वमुत्--क ५- अव्याप्तिः इति क-खयोः नास्ति
६- दुःखसाधा--ख ७- दुःखतादात्म्यम्-ख ८- तुमुबाद्यश्रवणात्-घ
मतुबाद्यश्रयणादेव-ख ९- दृष्टमिवा-ख १०- ललाटनेन-ख ११- दृष्टमित्य-ख
१२- तथापि-क १३- --स्थानीतरंगाग्रैः-ख

ङ्गानि वर्षतीवाञ्जनं नभः" इत्युत्प्रेक्षामुदाहृतवता दण्डिना[1] क्तोदाहरणयो-रिवशब्दश्रवणाल्लेपनवर्षणकर्तृभ्यां तमोनभसोरुपमामाशंक्य

"कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ[2] क्रियापदे ।

स्वक्रियासाधने[3] व्यग्रो नालमन्यदपेक्षितुम् ॥"

इति दूषितम् ।

"वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये ।

शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः[4] ॥"

इत्यत्र निरतिशयलावण्यशालिजंघासृष्ट्यनुमितेन निःशेषलावण्यकोशक्ष-येन निमित्तेन विधातुः शेषाङ्गनिर्माणे[5]पयुक्तलावण्योत्पादने यत्नमात्रमु-त्प्रेक्ष्यते, न तु तथाभूतयत्नवत्[6]तादात्म्यमिति स्पष्टमेव ।

अपि[7] च[8] अप्रकृतधर्मिकोत्प्रेक्षायां प्रकृतमित्यंशा[9]भावादव्याप्तिः । यथा--

"हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय[10] वेधसा ।

कृतमध्यबिलं विलोक्यते धृतगम्भीर[11]खनीखनीलिम[12] ॥"

अत्र कृतमध्य[13]बिलमिति पदार्थहेतुककाव्यलिंगापेक्षयातिशयोक्त्या कृ-तमध्यरन्ध्राकाशनैल्यत्वेना[14]ध्यवसितो यः कलंकस्तद्धत्त्वेन निमित्तेन कल-काध्यवसितधृतमध्यरन्ध्राकाशनैल्यत्वनिमित्तोत्प्रेक्षितं[15] कृतमध्यबिलत्वेन नि-मित्तेन वा चन्द्रमण्डलं दमयन्तीवदननिर्माणाय हृतसारत्वेनोत्प्रेक्षितम्, नतु प्रकृतं दमयन्तीवदनमेवोक्तप्रकाराहृतेन्दवसारांशनिर्मितत्वेनोत्प्रेक्षितम् । "यद् बालेन्दुकलोच्चयादुपचितैः सारैरिवोत्पादितं तत्पश्येयमनंगमंगलगृहं भूयो-[16]ऽपि तस्या मुखम् ।" इत्यत्रेव[17] तथाशब्दान्वयाभावात् । ननु यथा शब्दतोऽन्वया-लाभेऽपि "ब्राह्मणशतं भोज्यता"मित्यत्र प्रधानमतिलंघ्यो[18]पसर्जने[19] क्रियान्वयपर्य-वसानम्, संख्याया भोजनान्वयायोग्यत्वात्, तथेहापि प्रधानमिन्दुमण्डल-मतिलंघ्योपसर्जने[20] दमयन्तीवदने[21] इन्दुमण्डलाहृतसारांशनिर्मितत्वोत्प्रेक्षापर्य-वसानं स्यात्, अप्रकृतस्यावर्णनीयत्वादिति चेत्, न । अप्रकृतवर्णनस्याप्य-प्रस्तुतप्रशंसारूपेण प्रकृतातिशयाधानार्थतयान्वेतुं योग्यत्वात् । नच वाच्यं "इन्दुर्लिप्त इव" इत्यप्रस्तुतप्रशंसोदाहरणान्तर[22] इवात्रापि संभावनामात्रमेव

---

१- दण्डिनोदाहरण-क,ख २- न्यग्भूतोसौक्रिया--क ३- -साधनव्यग्रो-क ४- यत्नः-क ५- निर्माणे मात्रमुत्प्रेक्ष्यते-ख ६- यत्नः-ता-ख ७-अपि इति सपुःनास्ति ८- च इति सपुस्तकेनास्ति-९- प्रतमित्यं-ख १०- वदनान्य-ख ११-धृतगम्भीर-ख १२- नीलिमा-ख १३- प्रकृतमध्य-क १४- निल्यत्वेन-ख १५- -चोत्प्रेक्षितमध्यबिलत्वेन-क, --चोत्प्रेक्षितकृतमध्य--ख १६- मुयापि-क १७- इत्यत्रैव-क १८- मितिलंघ्य-ख १९- --लंघ्यनुसर्जनो-ख २०- सर्जने-ख २१- वदनेन्दु-ख,२२-हरणान्त इवा--ख

नोत्प्रेक्षे[1]ति । तत्र सहृदयहृदयाह्लादिनिमित्ताभावेनोत्प्रे[आ]क्षासामग्रीपरिपूर्त्यभा-
वादुत्प्रेक्षाया असंभवेऽप्यत्र तत्संभवादप्रस्तुतप्रशंसया संकरोपपत्तेः । त-
स्मादव्याप्तत्वान्नेदं लक्षणं युक्तमिति चेत् ।-

अत्र ब्रूमः । न तावत् 'हृतसारम्' इत्यादावव्याप्तिः प्रकृतशब्दस्य
विषयत्वाभिमतमात्रपरत्वात् । नचैवं 'इन्दुर्लिप्त इव' इत्यादावतिव्याप्तिः ।
तत्र सीतावदनसंनिधाने वस्तुतोऽन्यधर्मत्वे सत्यपीन्दुगताञ्जनलिप्तत्वसंभाव-
नायामन्यधर्मत्वस्याप्रयोजकत्वात्, धर्मस्य सहृदयहृदयाह्लादिनो विवक्षि-
तत्वाद्वा । अन्यत्वेनेत्यस्यान्येन प्रकारेणेत्यर्थं इति न हेतुफलधर्मस्वरूपोत्प्रे-
क्षास्वव्याप्तिः । यत्र धर्मिणि धर्म्यन्तरं तादात्म्ये[2]नोत्प्रेक्ष्यते तत्र धर्म्यन्त-
रमन्यः प्रकारः । यत्र तु कश्चिद्धर्म एव किंचित्प्रति हेतुतया फलतया
स्वरूपेण चो[3]त्प्रेक्ष्यते तत्र स एव धर्मोऽन्यः प्रकार इति सर्वत्राप्यनुगतेः ।
यद्वा हेतुफलधर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि तादात्म्येनैवोत्प्रेक्षा । तथा हि ।
'सैषा स्थली यत्र विचिन्वता त्वाम्, 'चोलस्य यद्भीतिपलायितस्य' इत्या-
दिहेतुफलोत्प्रेक्षोदाहरणयोस्तावद्विश्लेषदुःखललाटाक्षरदर्शनादिधर्मो हेतुतया
फलतया[4] वा[5] नोत्प्रेक्ष्यते । किं तु नूपुरमुखादिधर्मिकं यन्निश्चलत्वकण्टक-
संश्लेषादिनिमित्तकं[6] मौनव्यापाटनादिकं तदेव दुःखहेतुकमौनललाटाक्षरदर्श-
नार्थव्यापाटनादितादात्म्येनोत्प्रेक्ष्यते । अवश्यं च द्विविधस्या[7]पि मौनादेस्तादा-
त्म्येनाध्यवसाय आस्थेयः । अन्यथा निश्चलत्वादिहेतुके स्वाभाविकमौनादौ
दुःखादेर्हेतुत्वादिनोत्प्रेक्षणमसमञ्ज[अ]सं स्यात् । अंगीकृतश्च[8] 'सैषा स्थली'
इत्यादौ दुःखादि[9]धर्म एव मौनादिहेतुतया नूपुरादिगतत्वेनोत्प्रेक्ष्यत इति
वदताप्यलंकारसर्वस्वकृता द्विविधस्य मौनादेरभेदाध्यवसायः[10] । हेतूत्प्रेक्षायां
[11] यस्य प्रकृतसंबन्धिनो धर्मस्य हेतुरुत्प्रेक्ष्यते स धर्मोऽध्यवसाय[12]वशादभिन्न
उत्प्रेक्षानिमित्तत्वेनाश्रीयते इत्यादितद्वचनात् । आवश्यकं चान्यत्रापि क्वचि-
त्क्वचिद्धेतूत्प्रेक्षोदाहरणे निमित्तांशे तादात्म्याध्यवसायाश्रयणम् । यथा--

'उन्मेषं यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा[13] तस्य सौन्दर्यदर्पः ।

---

१- नोत्प्रेक्षते-ख २- तद्रूपात्म्ये-क ३- वा-क ४- फलतया इति गपुस्तके नास्ति
५- च-ग ६- निमित्तकमौनव्यापा--क-७- द्विवधस्या-क ८- अंगीकृत च-क,ख
९- दुःखादिधर्मो-ख,ग १०---अध्यवसानम्-क ११- यस्य यस्य प्रकृत--ख-
१२- वशात् इत्यारभ्य अध्यवसाय (२४ प०) इत्यन्त खपुस्तकेनास्ति १३- यस्य-ग

नीत: शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ते पादयो: पद्मलक्ष्मी: ।।'

अत्र हेतुतया हर्षोत्प्रेक्षां प्रति तत्फलत्वाभिमतं पादयो: पद्मलक्ष्म्या लगनं निमित्तं वाच्यम्, तच्च सर्वथैवासिद्धम् । अतस्तत्र पादयोर्य: स्वाभाविकशोभासम्बन्ध: स एव पद्मलक्ष्मीलग्नत्वेनाध्यवसितो निमित्तमिति समर्थनीयम् । एवं निमित्तांशे तादात्म्याध्यवसानावश्यंभावे तत्रैवोत्प्रेक्षाविश्रान्तिरस्तु । नच तत्र निमित्तान्तरमन्वेष्यं स्यादिति वाच्यम् । निश्चलत्वहेतुकमौनस्य दु:खहेतुमौनत्वेनोत्प्रेक्षायां चरणारविन्दविश्लेषकालभवत्वं[1] निमित्तं कण्टकसंश्लेषहेतुकव्यापाटनस्य ललाटलिपिदर्शनार्थव्यापाटनत्वेनोत्प्रेक्षायां महाराजोऽप्येवं कष्टमनुभवति, इत: परमपि कियदनुभाव्यमनेनेति जिज्ञासोत्थापकपलायनकालभवत्वमित्यादे: स्पष्टत्वात् ।

अयमेव पक्षो दण्डिनोऽभिमत: । यदाह---

'अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां प्रचक्षते ।।
मध्यन्दिनार्कसन्तप्त: सरसीं[2] गाहते गज: ।[3]
मन्ये मार्तण्डगृह्याणि[4] पद्मान्युद्धर्तुमुद्यत:[5] ।।
स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम् ।
तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य वर्ण्यते ।।' इति ।

अत्र सन्तापनिवृत्त्यर्थत्वेनान्यथैव[6] स्थिता करिणश्चेतनस्य जलगाहनरूपा[7] वृत्तिरन्यथा तद्वैरनिष्क्रयार्थजलावगाहनत्वेनोत्प्रेक्ष्यत इति स्वकृतलक्षणानुसारेणैव योजितम् ।

काव्यप्रकाशिकाकारस्याप्ययमेव पक्षोऽभिमत: । तेन हि 'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्'[8] इत्युपमानोपमेयस्य तादात्म्यसम्भावनमुत्प्रेक्षालक्षणमभिधाय 'उन्मेषं यो मम न सहते' इति तत्रोदाहरणं[9] कृतम् । ततश्च स्वकृतलक्षणानुरोधेन स्वाभाविकी पादशोभैव स्ववैरिजयप्रभवहर्षलग्नपद्मलक्ष्मीत्वेनोत्प्रेक्ष्यत इत्यभिमतमिति स्फुटमेव ।

---

१- कालभवत्वात्-ख २- सरसी-ख ३- जल:-ख ४- मार्ताण्ड-ख ५- सुतसुक:-क, ख,ग ६- अन्यथैव इति क-पुस्तके नास्ति ७- जलावगाहन-क,ख ८- तदात्म्य--क
९- अत्र (?)-क

तथा 'पिनष्टीव तरंगाग्रै:' इत्यादिधर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि प्रेरणादिरेव पेषणादिरूपत्वेनोत्प्रेक्ष्यते । न च प्रेरणादेर्विषयस्यानुपादानं दोष: । अतिशयोक्ताविव तदुपपत्ते: । उत्प्रेक्षाया अध्यवसायगर्भतया तत्र विषयनिगरणस्योचितत्वाच्च । न च प्रेरणादेर्विषयत्वेन निमित्तत्वाभावे निमित्तान्तरमन्वेष्यं स्यादिति वाच्यम् । प्रेरणस्य पेषणरूपतयोत्प्रेक्षायां प्रान्तगतफेनचन्दनपुंजीभवनं निमित्तम् । करव्यापनस्य दिगंगनालेपनत्वेनोत्प्रेक्षायां तद्धवलीकरणं निमित्तमिति निमित्तान्तरस्य जागरूकत्वात् ।

'लिम्पतीव तमोऽंगानि वर्षतीवाञ्जनं नभ:' इत्यादौ व्यापनादिलेपनादिरूपतया सम्भावितमिति वदता काव्यप्रकाशिकाकारेणापि धर्मस्वरूपोत्प्रेक्षोदाहरणेषु तादात्म्योत्प्रेक्षणपक्ष एवाश्रित: ।

एवं चुम्बतीव रजनीमुखं शशी-त्यादावपि रजन्या बदनत्वेनाध्यवसितं यदारम्भाख्यं मुखं तस्य शशिनश्च सम्बन्धश्चुम्बनत्वेनोत्प्रेक्ष्यते । वृत्तानुपूर्वे च' इत्यत्रायत्नपूर्वके शेषांगनिर्माणे यत्नपूर्वकत्वतादात्म्योत्प्रेक्षेत्याद्यूह्यम् ।

अन्यधर्मोऽनुगामितयैव न विवक्षित:, किं तूपमायां साधारणधर्म इव बिम्बप्रतिबिम्बभावादिभि: सर्वैरपि प्रकारैर्विवक्षित: ।

तथा च यथा--

'आवर्जिता किंचिदिव स्तनाभ्यां वासो[1] वसाना तरुणार्करागम्[2] ।
सुजातपुष्पस्तवकावनम्रा संचारिणी[3] पल्लविता लतेव ।।'

इत्यत्र बिम्बप्रतिबिम्बभावकृताभेदाध्यवसायेन ।

'तारुण्यकुंजरारूढां बिलासकमलाकुलाम् ।
मूर्तामिव मनोजस्य त्रैलोक्यविजय[4]श्रियम् ।।'

इत्यत्र समा[5]सभेदाश्रयणकृताभेदाध्यवसायेन च धर्मस्य प्रकृता[6]प्रकृतसाधारण्यादन्यधर्मसम्बन्ध: । तथा[7]--'अंगुलीमिरिव' इत्यत्रान्वयभेदकृताभेदाध्यवसायेन धर्मस्य प्रकृताप्रकृतसाधारण्यादन्यधर्मसम्बन्ध: सुसंपाद इति न तत्राव्याप्ति: । नापि 'भूयस्ताराणि' इत्यत्राव्याप्ति: । तत्रोपात्तधर्मादि[8]प्तधर्मान्तरसम्बन्धस्य निमित्तत्वात् । तत्र हि चन्द्ररूपविषयगतसंध्यानलमध्यागाम्बरभूषिकावर्तिततारानिकरनिर्मितत्वोत्प्रेक्षायां तारागतेन तच्छात्रिषु विरलत्वाविरलत्वरूपेणोपात्तधर्मेण निमित्तेन धर्मस्य चन्द्रगतस्य तद्विरलत्वाविरलत्वानुविधा[9]यिवृद्धिह्रासशालित्वस्याक्षेप: ।

---

१- 'वासोवसाना' इतिद्विरावृत्तम्-ख २- तरुणार्करागम्-ख ३- संचारिणि -ख
४- विजयम् (श्रियम् इति च नास्ति)-ख ५- समाग(?) समेदाश्रयणकृतभेदा-ख
६- अप्रकृत इति खपुस्तकेनास्ति ७- तथा इत्यारभ्य सबन्ध: (परपंक्तौ)
इत्यन्तं ख पुस्तकेनास्ति ८- धर्मादिाप्त इति ख पुस्तकेनास्ति ९- विधायि
इत्यारभ्य धर्मोत्प्रेक्षासु तु (परपृष्ठायां २य पंक्तौ) इत्यन्तं ख पुस्तकेनास्ति

अयं चापरोऽपि विशेषः । अन्यधर्मसंबन्धादित्यन्यपदार्थो धर्म्युत्प्रेक्षासु विषयुयेव, धर्मोत्प्रेक्षासु तु विषयिणो धर्मस्याश्रयः । एवं स्थिते यत्रानुपात्तो निमित्तभूतो धर्मस्तत्र सर्वत्रापि यो धर्मोऽन्यं-पदार्थस्य विषयस्य च संबन्धितया संभावनापदवीमारोहति तथाभूतोऽन्वेष्यः । तत्र 'वर्षतीवाञ्जनं नभः' इत्यत्र नभोगतत्वेन वर्षणक्रियोत्प्रेक्षापक्षे नभसो भूपर्यन्तगामिनीलिम[1]व्याप्तत्वमञ्जनवर्षं[2]कसाधारणनिमित्तम् । तमसो व्यापने नभःकर्तृकाञ्जनवर्षणक्रियात्वोत्प्रेक्षेति पक्षे तु सकलवस्तुसान्द्रमलिनीकरणादि । एवं 'वेलेव रामसागरस्य' इत्यादौ संक्षोभकारित्वादि गम्यं निमित्तमूहनीयम् । यत्र तु निमित्ततया धर्मस्योपादाने सत्यपि तत्संबन्धो विषयस्यान्यपदार्थस्य वाञ्जसा न प्रतीयते तत्र क्वचिन्निमित्त[3]भूतधर्मादन्यस्य कस्यचिद्धर्मस्य तत्ताद्रूप्य[4]संपादनेन तत्संबन्धः समर्थनीयः । क्वचिद्विषयस्य चा[5]न्यपदार्थस्य वा तद्धर्मा[6]श्रयताद्रूप्यसंपादनेन, क्वचिन्मिलितेन तेनोभयेन, क्वचिदुपात्तधर्मकृतधर्मान्तराक्षे[7]पेण । तत्र धर्मा[8]न्तरस्य निमित्तताद्रूप्यसंपादनमुपमाया धर्मस्य[9] संपादनमिव बिम्बप्रतिबिम्बभावादिभिः प्रकारैस्ते [10]प्रदर्शिताः ।

एवं विषयस्यान्यपदार्थस्य वा धर्माश्रया[11]ताद्रूप्यसंपादनं श्लेषादिभंग्या[12] । त[13]त्र विषयस्य श्लेषेण धर्माश्रयताद्रूप्यसंपादनं यथा---

अस्यां मुनीनामपि मोहमूहे
भृगुर्महान्यत्कुचशैलशीली ।
नाना[14]रदाङ्कादि मुखं श्रितोऽ-
व्यासो महाभारतसर्गयोग्यः ।।

---

८१- निलीम--ख २- वर्षक-ख ३- -दन्यस-ख ४- ताद्रूप्यसंपा--क
५- वान्यपदार्थस्य ग-क ६- वा द्धर्माश्रय--ख ७- -क्षपो (?)-ख
८- धर्मातरस्य-क ९- साधारण्यसंपादनमिव-क,ग १०- च इत्यधिकं
क पुस्तके ११- धर्माश्रयताद्रूप्य-क १२- भंग्यते-ख १३- त्र विषयस्य
(भंग्यते) तेऽत्र--ख १४- नानारथा-ख

अत्र भृग्वादिमुनि[१]रूपविषयगतदमयन्तीगोचरमोहोत्प्रेक्षायां यदेव त-त्वपरिशीलनादि निमित्तं न तद्विषयगतं किं तु तटादिगतम् । तस्य भृग्वादिशब्दश्लेषेण विषयगततानिर्वाहः । अपह्नुत्या यथा--

'किं शुकव्यपदेशेन त[२]रुमारुह्य सर्वतः ।
[३]दग्धादग्धामरण्यानीं पश्यतीव विभावसुः ।।'

अत्र दावानलरूपविषयगतदग्धादग्धवनप्रदेशदर्शनक्रियोत्प्रेक्षायां तरु-समारोहणं निमित्तम् । तदपि न विषयगतं किं तु किंशुकपुष्पगतम् । तत्रापि यद्यपि मुख्यं समारोहणं नास्ति तथापि तदीयं तरुसमाश्रयणमेव तदारोहणत्वेनाध्यवसितम्, ततश्च तत्रापह्नुत्या विषयस्य किंशुकपुष्पताद्रू-प्यसंपादनेन धर्मसंबन्धनिर्वाहः ।

अन्यपदार्थस्य श्लेषेण धर्माश्रयताद्रूप्यसंपादनं यथा--

'अस्या दो[४]हदशालिन्या मुखमापा[५]ण्डुरप्रभम् ।
सत्यं राजेति मन्येऽहं [६]यद्भुवं भोक्तुमिच्छति ।।'

अत्र मुखस्य चन्द्रत्वोत्प्रेक्षायां भुवं भोक्तुमभिलाषो निमित्तम्, तद्विष-यगतमपि नान्यपदार्थभूतचन्द्रगतम् । अतस्तत्र राजशब्दश्लेषेण चन्द्रस्य धर्माश्रयताद्रूप्यसंपादनेन धर्मस्य तदीयता निर्वाहः ।

धर्मान्तरस्य निमित्तधर्मताद्रूप्यसंपादनं विषयस्य तद्धर्माश्रयताद्रूप्यसंपा-दनं चेत्युभयमेलनं यथा--

'आकृष्टिवेगविचलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेष्टनयाम्बु[७]राशेः ।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले ।।'

अत्र मन्दाकिनीरूपविषयगतपयोधिमन्थव्यथाव्युपशमरूपफलोत्प्रेक्षायां यन्निमित्तं चरणमूले वेष्टनं तत्तादात्म्यसंपादनं प[८]र्यन्तवेष्टनस्य श्लेषेण विषय-यस्य य[९]त्ताद्रूप्यसंपादनमपह्नुत्या वे[१०]ति मिलितेनोभयेन विषयस्यान्यधर्मसंब-

---

१- भृग्वादिमुनिनामपिरूपविषय-ख २--मारुण्य-ख ३- दग्धादग्धामरण्यानां--ख दुग्धादग्धामरण्यानी-घ ४- दोहद-क,ख ५- पाण्डुर-ख ६- यद इति खपुस्तकेनास्ति ७- राशेः-ख [illegible] ८- पर्यन्त इत्यारभ्य संपादनम् (परपंक्तौ) इत्यन्तं खपुस्तकेनास्ति ९- तत्ताद्रू--क १०-वेति -क

न्धनिर्वाहः। उपात्तधर्मेण धर्मान्तराक्षेपस्तु दर्शित[1] एव। तस्मादन्यधर्मसंबन्धादित्येतदपि[2] सर्वोत्प्रेक्षानुगतमिति न काप्यव्याप्तमिति सर्वं समंजसम्।

अलंकारसर्वस्वकृतेत्थमस्य विभागः प्रदर्शितः। वाच्या प्रतीयमाना चेति तावदुत्प्रेक्षा द्विविधा। इवादिप्रयोगे वाच्या, तदप्रयोगे प्रतीयमाना। तत्र वाच्या जातिगुणक्रियाद्रव्याणामप्रकृतानामध्यवसेयत्वेन चतुर्विधा। तेषां च प्रत्येकं भावाभावाभिमानरूपतया द्वैविध्येनाष्टविधा। तेषु निमित्त[3]गुणक्रियारूपत्वेन षोडशभेदाः। निमित्तस्य पुनरुपादानानुपादानाभ्यां द्वात्रिंशत्प्रकाराः। तेषु पुनः प्रत्येकं स्वरूपहेतुफलोत्प्रेक्षारूपत्वेन षण्णवतिर्भेदाः। तत्र द्रव्यस्य स्वरूपोत्प्रेक्षणमेवेति[4] हेतुफलोत्प्रेक्षास्ततोऽपि[5] विघातनीयाः। ततः[6] षोडशभेदा न्यूनाः। जात्यादीनामपि हेतुफलोत्प्रेक्षायोर्निमित्तस्यानुपादानं न संभवति ततश्चतुर्विंशतिर्भेदा न्यूनाः। तथा च स्वरूपोत्प्रेक्षा वैकल्येन द्वात्रिंशद्भेदा, हेतुफलोत्प्रेक्षे प्रत्येकं द्वादशभेदे, इति षट्पंचाशद्भेदा[7] वाच्योत्प्रेक्षा। प्रतीयमानोत्प्रेक्षायामप्येवमेव गणना। तत्र स्वरूपोत्प्रेक्षायामपि निमित्तानुपादानं न संभवतीति भेदः। ततश्च तत्र स्वरूपोत्प्रेक्षा षोडशभेदा, हेतुफलोत्प्रेक्षे पूर्ववद्[8]द्वादशभेदे इति चत्वारिंशद्भेदा गम्योत्प्रेक्षा। एवमेव[8] मिलित्वा षण्णवतिभेदोत्प्रेक्षेति।

विधानार्थेन पुनर्द्रव्यस्य हेतुफलोत्प्रेक्षणमभ्युपगम्यांगीकृत्यानुपात्तनिमित्तेषु गम्यस्य निमित्तस्य गुणक्रियारूपत्वेन भेदगणनमजातपुत्रनामकरणकल्पं[9] न चारुत्वावहमिति तदनादृत्यान्यथा विभागो दर्शितः। वाच्यायां[ां] स्वरूपोत्प्रेक्षा चतुर्विंशतिभेदा, अनुपात्तनिमित्ताया गुणक्रियारूपभेदगणनाभावेन भेदाष्टकह्रासात्। हेतुफलोत्प्रेक्षे प्रत्येकं षोडशविधे। द्रव्योत्प्रेक्षागोचराणां भावाभावाभिमानेन गुणक्रियानिमित्तत्वेन[10] चतुर्णां भेदानामाधिक्यात्। एवं षट्पंचाशद्भेदा वाच्योत्प्रेक्षा। प्रतीयमानायां[11] पुनः स्वरूपोत्प्रेक्षापि षोडशप्रकारा। तत्र निमित्तानुपादानासंभवेन[12] तन्निबन्धन[13]भेदाष्टकह्रासात्। ततश्चाष्टचत्वारिंशद्भेदा प्रतीयमानोत्प्रेक्षा। एवं मिलित्वा चतुरुत्तरशतभेदोत्प्रेक्षेति।

अथोदाहरणानि दिङ्मात्रेण प्रदर्श्यन्ते। उपात्तगुणनिमित्तजातिभावस्वरूपोत्प्रेक्षा यथा --

स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः।

---

१-प्रदर्शित-क २- स्तत् इति कपुस्तकेनास्ति ३- निमित्तस्य गुण--क,ख ४- --मेवे हेतु के ५- स्ततोऽतिपातनीयाः-क ६- ततः इत्यारभ्य संभवति (परपंक्तौ) इत्यन्तं खपुस्तके नास्ति ७- पंचपंचाशद्भेदा-घ ८- एवं मिलित्वा-क ९- करणकल्प-ख १०- च इत्यधिकं खपुस्तके ११- प्रतीयमान,या-घ १२- दानसंभवेन-ख १३- निबन्धने- ख

स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ।।'

अत्राङ्कुरशब्दस्य जातिशब्दत्वाज्जातिरुत्प्रेक्ष्यते । उपात्तः कौटिल्यगुणो निमित्तम् । स्वमुपात्तक्रियानिमित्तापि जातिभाव[1]स्वरूपोत्प्रेक्षोदाहर्तव्या । उपात्तक्रियानिमित्तगुणभाव[2]स्वरूपोत्प्रेक्षा यथा---

'निवेशितं यावकरागदीप्तये लग्नं तदीयाधरसीम्नि सिक्थकम्[3] ।
रराज तत्रैव निवस्तुमुत्सुकं मधूनि निर्धूय सुधासधर्मिणि[4] ।।'

अत्रौत्सुक्यं गुण उत्प्रेक्ष्यते । उपात्ता[5] लगनक्रिया[6] निमित्तम् । स्वमुपात्तगुणनिमित्तापि गुणभावस्वरूपोत्प्रेक्षोदाहर्तव्या । उपात्तगुणनिमित्तक्रियाभावस्वरूपोत्प्रेक्षा[7] यथा---

'अथ साध्यसान्द्रकिरणारुणितं[8] हरिहेतिहूति मिथुनं पततोः ।
पृथगुत्पपात विरहार्तिगलद्[9]हृदयस्रुतासृगनुलिप्तमिव ।।'

अत्र रुधिरानुलेपनक्रियोत्प्रेक्ष्यते । उपात्त आरुण्य[10]गुणो निमित्तम् । स्वमुपात्तक्रियानिमित्तापि क्रियाभावस्वरूपोत्प्रेक्षोदाहर्तव्या[11] । उपात्तक्रियानिमित्तद्रव्यभावस्वरूपोत्प्रेक्षा यथा--

'एकैकमुद्धृतगुणं[12] च्युतदूषणं च
हित्वान्यमन्यमुपगम्य परित्यजन्ती[13] ।
एतां जगाद जगदार्चितपादपद्मा
पद्मामिवाच्युतभुजान्तर[14]विच्युता सा[15] ।।'

अत्र पद्माया एकतया द्रव्यत्वाद्द्रव्यमुत्प्रेक्ष्यते । उपात्ता उपगम्यपरित्यजनक्रिया निमित्तम् । स्वमुपात्तगुणनिमित्तद्रव्यभावस्वरूपोत्प्रेक्षोदाहर्तव्या । एवं भावाभिमानेषु[16] जात्यादिषूपात्तनिमित्ता अष्टौ भेदाः संपन्नाः । अनुपात्तनिमित्तजातिभाव[17]स्वरूपोत्प्रेक्षा यथा--

'वर्षातपानावरणं चिराय काष्ठौघमालम्ब्य समुत्थितेषु[18] ।
बालेषु[19] तारकबकेष्विवैकं[20] विकस्वरीभूतमवैमि चन्द्रम् ।।'

अत्र बकजातिरुत्प्रेक्ष्यते । अनुपात्तो धावल्यवर्तुलत्वादिर्गुणो[21] निमित्तम् । अनुपात्तनिमित्तगुणभावस्वरूपोत्प्रेक्षा[22] यथा[23]--

---

१- भावः स्वरूप--क २- गुणस्वरूपोत्प्रेक्षा-क,ख ३-सिष्कक (?)-ख ४-सधर्मिणी-ख
५- उपात्तलगन--क ६- लग्नक्रिया-ख ७- क्रियास्वरूपोत्प्रेक्षा-ख-८- किरणा रुणि--क९- -तिदल-कख,ग १०-आरुण्यगुण निमित्तम्-क ११-उदाहार्या-ख१२-गण-क १३-परित्यजन्ती-क १४-भुजतिर--ख १५-सः-ख १६-भावमिमा--ख १७-जातभाव-घ,
१८- समुत्थितेषु-क,ख १९-नेकेषु-क,वालेषु इति खपुस्तकेनास्ति २०---ष्विवहं-ख
२१-वर्तुलत्वादि निमित्तम्-ख २२- अनुपात्तनिमित्तगुणस्व[illegible]-क, अनुपात्तगुणस्वरू--ख
२३- यथा इति घ पुस्तकेनास्ति

"अयमाभाति राजेन्द्रो विजिताखिलशात्रवः ।

अनुजीविषु सर्वेषु प्रसाद इव मूर्तिमान् ।।"

अत्र प्रसादो गुण उत्प्रेक्ष्यते । अनुपात्तो बहुप्रदत्वसुखनिर्णेव्यत्वादि[1]-र्निमित्तम् । अनुपात्तनिमित्तक्रियाभावोत्प्रेक्षा यथा--

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।

असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ।।"

अत्र क्रियोत्प्रेक्ष्यते । अनुपात्तं[2] व्यापनादि निमित्तम् । अनुपात्तनि[3]-मित्तद्रव्यभावोत्प्रेक्षा यथा--

देहस्था दर्पणे यस्य पश्यति प्रतिमासुमा ।

अन्यार्धाभ्यामिवोत्पन्नमर्धनारीश्वरान्तरम् ।।"

अत्रार्धान्तरोत्पन्नार्धनारीश्वरान्तरद्रव्यमुत्प्रेक्ष्यते[4] । प्रतिबिम्बव्यत्यस्तमा[5]-गस्त्रीपुरुषाकारशालित्वमनुपात्तं निमित्तम् । अर्धनारीश्वरान्तरोत्प्रेक्षायामपि वस्तुतोऽर्धनारीश्वरस्यैकत्वाद्द्रव्योत्प्रेक्षात्वमविरुद्धम् । यथा वा--

"विललास जलाशयोदरे क्वचन द्यौरनुबिम्बितेव[6] या ।

परिखा[7] कपटस्फुटस्फुरत्प्रतिबिम्बानवलम्बिताम्बुनि[8] ।।

अत्र देवपुरीद्रव्यमुत्प्रेक्ष्यते । सौभाग्यातिशयः कुण्डिनपुरीगतोऽनुपात्तो निमित्तम् । एवं चतुर्विधानुपात्तनिमित्तोदाहृता । अस्यां निमित्तस्य गुण-क्रियारूपभेदमालोच्याष्टविधत्वमूहनीयम्[9] । एवं जात्याद्युत्प्रेक्षा भावाभिमानवत्यः षोडश संपन्नाः ।

अथ वा विधानाथोक्तप्रकारेणानुपात्तनिमित्तगुणक्रियाभेदो न चिन्तनीयः । अनुपात्ते निमित्ते तद्व्यवस्थाया असंभवात्[10] । यथा--"विललास जलाशयोदरे" इत्यत्र निरतिशयसौभाग्यवत्त्वं गुणो निमित्तमित्यपि वक्तुं शक्यम् । निरतिशयसौभाग्यभागित्वं[11] क्रियानिमित्तमित्यपि । अतो द्वादशैव भेदाः । अथाभावाभिमानवत्यः स्वरूपोत्प्रेक्षाः ।

उपात्तगुणनिमित्तजातिगुणक्रियाणामभावोत्प्रेक्षा यथा--

"अकुंकुमदानमिवाङ्गमेतदयावकारुण्यमिवाधरं ते ।

अनञ्जनोल्लेखमिवादियुग्मं स्वाभाविकैरेव गुणैरुदीक्षो ।।

---

१- त्वादिनिमित्तम् । -ख- निर्णेव्यत्वादिर्निमित्तक्रियाभावोत्प्रेक्षा, यथा घ
२- अनुपात्त-ख ३- अनुपात्तद्रव्य--ख ४- रोतपन्ना अर्ध--ख ५- प्रतिबिंबगत
बिवत्यस्त क (?) ख ६-- म्बितेव-क ७- परिखादुस्फुट--ख ८- अम्बुनि:(?)
ख-९- ष्टविधमहनीयम्-क १०- असंभवा-ख ११- सौभाग्यमागित्वक्रिया--क

अत्र कुंकुमरजोयावकरागाञ्जनोल्लेखनरूपाणां जातिगुणक्रियाणामभावा[1] उत्प्रेक्ष्यन्ते। उपात्ताः स्वाभाविकगौरारुणनीलवर्णा निमित्तम्। एतासु क्रियानिमित्तमप्युदाहार्यम्। उपात्तक्रियानिमित्तद्रव्याभावोत्प्रेक्षा यथा--

"भुवि त्वन्मुखमालोक्य पूर्णचन्द्रमिवोदितम्।
अचन्द्रामिव[2] पश्यामि दिवं शोभाविवर्जनात्॥"

अत्र चन्द्रस्य द्रव्यस्याभाव उत्प्रेक्ष्यते। उपात्ता वर्जनक्रिया निमित्तम्। एवमुपात्तगुणनिमित्तापि द्रव्याभावोत्प्रेक्षोदाहार्या। एतावेव श्लोकौ "इदं विशालादि विभावयामि" "पदवीममृतान्धसाम्" इति चतुर्थपादयोः पाठेऽनुपात्तनिमित्तजात्यागुणाभावोत्प्रेक्षोदाहरणे[3]। एवमभावाभिमानवत्योऽपि स्वरूपोत्प्रेक्षाः पूर्वोक्तरीत्या षोडश द्वादश वेति द्वात्रिंशच्चतुर्विंशतिर्वा स्वरूपोत्प्रेक्षाभेदाः प्रदर्शितप्रायाः[4]।

एतासु विषयिणः क्वचित्तादात्म्येनाध्यवसायः। यथा--"स वः पायादिन्दुः[5]" इत्यत्र। क्वचित् संसर्गितया यथा--"निवेशितं यावकरागदीप्तये" इत्यत्रौत्सुक्यस्येत्ययमपि भेदो बोद्धव्यः।

अथ हेतूत्प्रेक्षा। उपात्तगुणनिमित्ता जातिहेतूत्प्रेक्षा यथा--

"तनुरेणशावकदृशस्तनीयसी[6] शनकैरवाप शरकाण्डपाण्डुताम्।
उदरान्तरस्थितिमुपेयुषो हरेः करपाञ्चजन्यकिरणैरिवोद्गतैः॥"

अत्र किरणजातिः पाण्डिमानं प्रति हेतुत्वेनोत्प्रेक्ष्यते। स एव पाण्डिमा निमित्तम्। एवं क्रियानिमित्तापि जातिहेतूत्प्रेक्षोहनीया[7]। क्रियानिमित्ता गुणहेतूत्प्रेक्षा यथा--

"वहतो बहुशैवलक्ष्मतां[8] धृतरुद्राक्षमधुव्रतं खगः।
स नलस्य करं ययौ[9] पुनः सरसः कोकनदभ्रमादिव॥"

अत्र नलकरप्राप्तिक्रियां प्रति कोकनदभ्रमो हेतुत्वेनोत्प्रेक्ष्यते। सैव प्राप्तिक्रिया निमित्तम्। उत्तरत्रापि हेतूत्प्रेक्षायां सर्वत्र फलमेव निमित्तम्। एवं गुणनिमित्तापि गुणहेतूत्प्रेक्षा द्रष्टव्या। गुणनिमित्ता क्रियाहेतूत्प्रेक्षा यथा--

"विस्वता[10] नायिकतेव मित्राः स्वगोसहस्रेण समं जनानाम्।
गावो[11]ऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः॥"

---

१-अभावा इति खपुस्तकेनास्ति २- चन्द्रामिव-ख ३- प्रेक्षाणामुदाहरणे-क, प्रेक्षामुदाहरणे-ख ४- दर्शितप्रायाः-क ५- पायादित्यत्र-क६- तनुरेणुशावक--क ७- ऊहनीयाः-ख ८- बहुशवलता-घ ९- ययौ करं-क १०- विवत्वता ऽनायिकतेव-ग ११- गावोऽपि-ख

अत्रान्ध्यगुणं प्रति[1] नयन[2]क्रिया हेतुत्वेनोत्प्रेक्ष्यते । एवं क्रियानिमित्तापि क्रियाहेतूत्प्रेक्षोदाहार्या । क्रियानिमित्ता द्रव्यहेतूत्प्रेक्षा यथा---

'हृदयं परिपूतमेव नित्यं विदुषस्तस्य विशुद्धकर्मभाजः ।
वियदा[3]पगयेव विश्वमूर्तेः प्रवहन्त्या वसतोऽन्तरंघ्रिपद्मात् ।।'

अत्र पवनक्रियां प्रति गंगाद्रव्यं हेतुत्वेनोत्प्रेक्ष्यते । एवं गुणनिमित्तापि हेतूत्प्रेक्षोदाहार्या । इत्थं भावाभिमानवत्यो हेतूत्प्रेक्षा उदाहृताः[4] ।

अथाभावाभिमानवत्यः ।

'रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः ।
भूमौ प्रतापयशसी सृष्टवान्सततो[5]ऽस्थिते ।।'
'तस्मिन्नस्तंगते भानौ विधुस्त[6]स्य पदे कियान् ।
इत्यनादरतो नूनं मीलत्यम्बु[7]रुहाकरः ।।
वीणावादनसंरम्भाच्चकम्पे दक्षिणः स्तनः ।
अदृष्ट्वेवेतरं तस्यास्तम्भाभोग[8]तिरोहितम् ।।'

अत्राद्यश्लोके रविचन्द्रयोर्जातिद्रव्ययोरभावौ हेतुत्वेनोत्प्रेक्ष्येते । द्वितीयतृतीयश्लोकयोरादरदर्शनयोर्गुणक्रिययोरभावौ । सृष्टिमीलनकम्पक्रि[9]यास्तु निमित्तानि । एवं गुणनिमित्ता अप्यभावहेतूत्प्रेक्षा उदाहार्याः । एवं षोडशभेदा हेतूत्प्रेक्षा दर्शिता ।

अथ फलोत्प्रेक्षा-

'सौधेषु यत्र सुलभासु[10] मृगेक्षणानां
ज्योत्स्नापहासचतुरासु विसृत्वरीषु ।
चन्द्रस्तदर्थमिव रात्रिषु बंभ्रमीति
कुर्वन्करप्रसरणान्यधिजालवर्गम्[11] ।।'
तव निर्वर्ण्यं[12] यद्वर्णं स्वर्णं वर्णाय तादृशे ।
त्वत्कोशगेहान्निर्गम्य तीर्थेषु[13] वसति ध्रुवम् ।।'
'रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ।।'

---

१- गवानयनक्रिया-क,ख,ग २- क्रिया इत्यारभ्य उत्प्रेक्ष्यते (५ प०) इत्यन्तं खपुस्तकेनास्ति ३- विपदापगयेव-क (?) घ- ४- उदाहृत-ख ५- सततादिते-ग ६- स्तस्यास्त ७- मीलन्त्यम्बु-क ८- स्तम्बाभाग--क,ख, ९- मीलनकक्रिया-ख १०- सुखभासु-क ११- वर्गम्: (?) ख- १२- निर्वर्ण-क,ख १३- तिर्थेषु-ख

'दुग्धार्णवसहायाय कैलासाचलकोटये ।
नूनं प्रतापरूद्रेण यशो दिक्षु प्रसारितम् ।।'

एषु श्लोकेषु क्रमेण मुखप्रभागौरवर्णपरिवर्तनदुग्धार्णवकैलासरूपाणि जातिगुणक्रियाद्रव्याणि फलत्वेनोत्प्रेक्ष्यन्ते । भ्रमणतीर्थवासप्रस्थानप्रसारणक्रिया निमित्तानि । एवं गुणनिमित्ता अप्युदाहार्या: ।

अभावाभिमानवत्य: फलोत्प्रेक्षा यथा--

'त्वदाननेन सादृश्यं प्राप्तुकामो निशाकर: ।
कलंकपंकाभावाय नूनं मज्जति[1] सागरे ।।'

'अरण्यवासा[2]ज्जिर्तबान्धवासु मृगीष्ववै[3]रार्थमिवाशरण्या: ।
कलिन्द[4]देशेश्वरवैरिनार्य: पराङ्मुखा लोचनविभ्रमेषु ।।'

'हैमाद्रिकूलेषु विहारभाज: सिद्धांगनाकल्पितचन्द्रकाथान् ।
श्रीवीररुद्रस्य यशोविलासान्गायन्त्य[5]संस्पृष्ट[6]मिवान्धकारम् ।।'

'वीररुद्रनरेन्द्रस्य जयप्रस्थानसंभवम् ।
रज: पिहितदिग्गो[7]लं निराकाशमिवोत्थितम् ।।'

एषु श्लोकेषु पंकवैरस्पर्शनाकाशा[8]नामभावा: फलत्वेनोत्प्रेक्ष्यन्ते । तेषु[9] पराङ्मुखत्वमेको गुण: । अन्या: क्रिया: । इत्थं गुणक्रियानिमित्तभेदा उदाहार्या: । एवं फलोत्प्रेक्षा: षोडश दर्शिता: । इति वाच्योत्प्रेक्षावर्ग: ।

अथ गम्योत्प्रेक्षा[10] दिङ्मात्रेणोदाह्रियते--

'नभसि महसां ध्वान्तध्वांक्षप्रमापणपत्रिणा-
मिह विहरणै: श्येनंपाता रवेरवलोकयन्[11] ।
शशविशसनत्रासादाशाम्भाच्चरमां शशी
तदधिगमनाचारापारावतैरुदडीयत ।।'

अत्र सूर्येण विसृष्टानां ध्वान्तकाकप्रमापणश्येनरूपाणां किरणानां विहरणेन निमित्तेन सूर्यस्य श्येनपात[12]वती मृगयाविहारक्रियोत्प्रेक्ष्यत इति क्रियास्वरूपोत्प्रेक्षा तावदेका । तस्माच्छशिनस्त्रास: तस्य दिगन्तरगमनं[13] प्रति हेतुत्वेनोत्प्रेक्ष्यत इति हेतूत्प्रेक्षान्या । ततस्तदधिगमस्तारा[14]पारावतानां मुग्धत्वेनाध्यवसितं[15] तत्तत्स्थाने[16]ऽस्फुरणं प्रति हेतुत्वेनोत्प्रेक्ष्यत इत्यपरा च हेतूत्प्रेक्षा । सर्वाश्चैता गम्या: । इवाद्यभावात् । एवमन्या अपि स्वयमेव

---

१- मति सागरे-ख २- वासाज्जित--ख,ग,घ ३- वैरार्थमिवाशरण्य:-क, 'रार्थ' इत्यारभ्य सिद्धांगना (११ पंक्तौ) इत्यन्त ख पुस्तकेनास्ति ४- कलिंग--क ५- गायन्त्यर्य-ख ६- स्पृष्टमिवान्धकारम्-ख ७- दिगालान्निराकाशमिवाथितं-ख ८- -नाकाशनां भाव:-ख ९- मज्जनादयो निमित्तानि इत्यधिकं क-खयो: १०- गम्योत्प्रेक्षा:-ख,ग घ-११- अवलोकयत्-क १२- श्येनपातवती-घ १३- दिगन्तरगमनं-क १४- स्तदवगमन--क,ख १५- मुग्धत्वेनाध्यवसित:-ग,घ १६- ततत्स्थाने-क ततृस्थाने-ख ॐ- स्निग्धा...घ·

बोध्या: । नूनमादिशब्दविरहेण पूर्वोक्तप्रकाराणामुन्नेतुं शक्यत्वात् । प्राग्[१]-दाहृतानामेव श्लोकानां नूनमादिशब्दाविधानेन गम्योत्प्रेक्षोदाहरणत्वसंभवाच्च गम्योत्प्रेक्षा: पृथक्साकल्येन[२] नोदाहृता: ।

इदं तु चिन्त्यते । गम्योत्प्रेक्षासु जातिद्रव्यस्वरूपोत्प्रेक्षे[३] संभवतो नवेति । संभवत इति पक्षे ---

'रुचयोऽस्तमितस्य भास्वत:[४] स्खलिता यत्र निराश्रया:[५] खलु ।
अनुसायमभुविलेपनापणकाश्मीरजपण्य[६]वीथय: ।।'

'परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचर: ।
फणिभाषितभाष्यफक्किका विषमा कुण्डलनामवापिता ।।'

इत्यादिनोदाहरणेन भाव्यम् । अभिमतं[७] च तथा केषांचित् । अलंकारसर्वस्वकारस्य तु न संभवत[८] इति पक्ष: । एतदभिप्रायेणैव तेनोक्तं 'गम्योत्प्रेक्षाविभागे प्रायश्चात्र स्वरूपोत्प्रेक्षा न संभवति' इति । कस्तर्ह्ययं नयोस्तस्य पक्षोऽलंकार:[९] रूपकमेव । अत एव---

'पीयूषप्रसृतिर्नवा[१०] मखभुजां[११] दात्रं तमोलूतये
स्वर्गंगाविमनस्कको कवदनस्त्रस्ता[१२] मृडालीलता[१३] ।
छिन्नार्वि: स्मरकार्मुकस्य किमपि प्राणेश्वरी सागसामाशातन्तुरुदञ्चति प्रतिपदि प्रालेयभानोस्तनु:[१४] ।।'

इत्यत्र मालारूपकमुदाहरता 'स्वर्गंगा विमनस्का' इत्यादिष्वपि रूपकमेवो[१५]ररीकृतम् । तस्माज्जातिद्रव्योत्प्रेक्षे परिहृत्यैव गम्योत्प्रेक्षावर्ग: परिगणनीय: ।

इदं चान्यद्बोद्धव्यम् । धर्म्युत्प्रेक्षासु विषयिविषयानुगतो धर्मो धर्मोत्प्रेक्षासु विषयाश्रय[१६]विषयानुगतो धर्मश्च निमित्तम् । तेन 'उवाह या तनुलता' इत्यादौ वैमल्यं निमित्तमित्यादिपक्षो न युक्त: । तस्य तादात्म्यसंभावनोपयुक्तप्रतिबिम्बघटकस्य तद्धर्मस्य[१७] विषयधर्मत्वाभावात् । 'यत्रान्यधर्मसं[१८]बन्धात्' इत्यादिलक्षणं वदद्भि: सर्वैरपि विषयधर्मस्यैव निमित्तत्वस्य[१९] व्यवहृतत्वादित्यलमतिविस्तरेण । अत्र ब्रूम:-

---

१- प्रायश: इत्यधिकं क-खयो: २- साकाल्येन-ख ३- स्वरूपो--ख ४- स्वभावत:(?) क, भावत:-ख ५- निराश्रय: ख ६- काश्मीराजलपण्य--क,७- अभिमान च-ख ८- भक्त-क ९- पक्षोऽलंकार:-ख १०- प्रसृतिर्न वा-घ ११-मखभुजा-ख १२- वदनस्ता-ख १३- मृणालीलता-क,ख,ग १४- प्रागेयाभावोस्तनु:-ख १५-रूपकत्वमेवो--क १६- विषयस्याश्रय-क १७- तनुगतो धर्मश्च निमित्तं (?) धर्मस्यविषयाङ्गत्(?) वाभावात् गतो धर्मश्च निमित्त-ख १८- यत्रोक्त्य-ख १९- निमित्तस्य त्वं-ख

'विषयिण उत्प्रेक्षायां जातिगुणाधात्मना विभागविधा[1] ।
यादृशी नैव शोभा तयोपमायामिवोपमेयस्य ।।
तदभावे[2]ऽलंकारा: संभवमात्रेण न विभागम् ।
अर्हन्तीतरथास्या विषयो[3]ऽप्येवं विभक्तव्य[4]: ।।
धर्मस्यापि[5] विभागो गुणक्रियात्मा न[6] चारुताहेतु: ।
उपमायामिव सोऽपि न्यूनस्तदभावयो[7]संकलनात् ।।
मनसि सन्तमिव प्रियमीक्षितुं नयनयो: स्पृहयान्तरुपेतयो: ।
ग्रहणशक्तिरभूदिदमीययोरपि न संमुखवास्तुनि वस्तुनि[8] ।।
वतंस[9]नीलाम्बुरुहेण किं दृशा विलोक्यमाने विमनी[10]बभूवतु[11]: ।
अपि श्रुती दर्शनसक्तचेतसा[12] न तेन ते शुश्रुवतुर्मृगीदृशाम्[13] ।।
इत्यादिषु[14] पश्यामो गुणक्रियाभावयोरपि व्यक्तम् ।
उज्ज्वलभावनिबन्धनमुत्प्रेक्षायां निमित्तत्वम् ।।'
अत्र द्वयार्थे उदाहरणे नयनयोर्हृदयगतप्रियवीक्षणायान्त:प्रविष्टत्वो-[15]
त्प्रेक्षणायां[16] वाह्यवस्तुग्रहणशक्त्यभावो[17] निमित्तम् । द्वितीये श्रोत्रेन्द्रियगत-[18]
विलोकनैकाग्रत्वोत्प्रेक्षायां श्रवणक्रियाभावो निमित्तम् । एवम्--
'वीरासनैर्ध्याननिषुणामृषीणाममी समध्यासितवेदिमध्या[19]: ।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा[20] इव शाखिनोऽपि ।।'
इत्यादीन्यभावनिमित्तत्वे भूयांस्युदाहरणानि ।
'अपि च समुच्चयभेद: परिगणनीयो निमित्तेषु[21] ।
भावौ भावाभावौ समुच्चितावपि निमित्ततां भजत[22]: ।।'
'अवैमि[23] हंसावलयो वलक्षास्त्वत्कीर्तिमूर्तेश्चपला[24]: पुलाका: ।
उड्डीय[25] युक्तं पतिता: श्रवन्तीवेशन्तपूरं परित: प्लवन्ते ।।'
'उडुपरिषद्[26]: किं नार्हन्ती निश[27]: किमनौचिती[28]
पतिरिह[29] न यद्दृष्टस्ताभ्यां[30] गणीयसां[31] गण: ।।
स्फुटमुडुपतेराश्मं[32] वक्ष: स्फुर[33]न्मलिनात्मन-[34]
श्छविमदनयो[35]र्विच्छेदेऽपि द्रुतं बत न द्रुतम् ।।

-------------------------------------------

१- विभागविध -क २- तुदभावोऽलंकारा:-क३-द्विषयो,-क४-विभक्तय:-ख५-धर्मस्यापि विभापि विभागो-ख ६- न इति खपुस्तकेनास्ति ७-संकलना-ख८-संमुखवस्तुवस्तुनि-ख ६-वतंश-ख १०-विमली--क ११-बभूवभू:-ख १२-चेतसा-ख१३-सु-स्नुवतुमृगी-ख१४-इति-क १५-अंत:प्र--प्रेक्षणायां द्विरावृत्तम्-ख १६---प्रेक्षायां-क १७-युक्तभावो-ख१८---न्द्रियागत-ख१६-वेदिवध:-ख-२६--रूढ-ख २१-निमुक्तउ (?)भावोभावोभावौ--ख २२-भजत:-क २३-अभैमिह्वा मिह्सावलक्ष स्त्वतकीतिपूर्चपला :पूलाका:-ख२४-पूर्च:-क २५-उड्डीय-श्रवन्तीवे द्विरावृन्त्य वेशन्तीवेशन्ते--खपुस्तके २६-उपड (?)परि-ख २७-निशा-क, निश-ख २८-कीमनौ--ख २६-पतिरिह-ख३०-दृष्टाताभ्यां-ख३१-गणीयस्योगण:-क,ख ३२-रावक्ष:-ख ३३-स्फार-ख३४- आत्मनो-क ३५- पदनयो--क, लविपद (?)-ख

"स्वभावादिषु बह्वीषु निह्नोतुं केन शक्यते ।
मुञ्चितनिमित्तत्वमुत्प्रेक्षासु[1] निरीक्षितम्[2] ॥"

आद्ये[3] उदाहरणे हंसावलीनां कीर्तिपुलाकत्वोत्प्रेक्षायां[4] धावल्यगुणो जलोपरि प्लवनक्रिया चेत्युभयं[5] निमित्तम् । द्वितीये उडुपतिवदासोऽश्मविकारत्वोत्प्रेक्षायामश्मत्वविरूपो[6] भावो द्रुतत्वाभावश्चेत्युभयं निमित्तम् । किं च -

"उत्प्रेक्षायां निमित्तत्वं यज्जातिद्रव्ययोरपि[7] ।
तेनापि[8] विकलां विद्मो[9] निमित्तगणनामिमाम् ॥"

"द्रोणः स तत्र वितरिष्यति भाग्यलभ्य-[10]
सौभाग्यकार्मणमयीं पदवीं गिरिस्ते ।
तद्दीपदीप[11] इव दीप्तिभिरोषधीनां
चूडामिलज्जलदकज्जलदर्शनीयः ॥"

अत्र[12] द्रोणाचलस्य[13] दीपत्वोत्प्रेक्षायां तत्प्रौढौषधिवृक्षदीपस्योपरि[14] स्थितं[15] जलदकज्जलं[16] च निमित्तमिति जाते[17]र्निमित्तत्वं दृष्टम्[18] ।

"निशासु मूर्ध्नि स्फुरता यत्सौधो राजतीन्दुना ।
श्रीकण्ठो भवतरक्षार्थं संनिधानं भजन्निव ॥"

इत्यत्र बाणासुरसौधस्य शिवरूपोत्प्रेक्षायां मूर्ध्नि स्फुरन्निन्दुर्निमित्तम् । एवम्-"भास्वतालंकारेण, श्वेतरोचिषा स्मितेन, लोहितेनाधरेण, सौम्येन दर्शनेन, गुरुणा नितम्बेन, सितेन हारेण, शनैश्चरेण पादेन, विकचेन लोचनोत्पलेन, त्रिभुवनविजयकेतुना[19] रूपेण, ग्रहमयीवे" त्यत्र वासवदत्तायाः सकलग्रहमयत्वोत्प्रेक्षायां श्लेषेण[20] तद्ग्रहरूपापन्नालंकारादयो निमित्तमिति जातिक्रियागुणानां समुच्चितानां निमित्तत्वं दृष्टम् । न चोदाहृतेषु दीप्त्यादिसंबन्धो निमित्तं[21] स[22] च सर्वो गुण एवेति वाच्यम् । तथा सति "ईदृक्षां क्षामतां[23] गतौ[24]" इत्यादावपि गमनादिक्रियासंबन्ध एव निमित्तमिति क्रियाया एव[25] निमित्तत्वप्रसंगात्[26] । न च तथापि "भास्वतालंकारेण[27]" इत्यादौ श्लेषेण सूर्यरूपतापन्ना अलंकारादयो निमित्तं न त्वविशिष्टा[28] जातिर्द्रव्यं वेति वाच्यम् । तथासति "कपालोन्मुक्तः स्फटिकधवलेनांकुर इव" इत्यादावपि कपालोन्मुक्तांकुरत्वा[29]दिविशिष्टमेवोत्प्रेक्षणीयं न त्वविशिष्टं[30] जात्यादि-

---

१- उत्प्रेक्षाया-क,ख २- नीरीक्षितम्-क,ख ३- आद्ये-ख ४- प्रेक्षाया-क ५- उभया-ख ६- प्रेक्षाया-ख ७- अपि: (?) -ख ८- द्वितीय: इत्यधिकं सपुस्तके ९- विघ्नो-घ १०- लभ्य इति सपुस्तकेनास्ति ११--दिप-ख १२- इत्यत्र-ख १३- द्रोणचलस्य-ख १४- वृक्षदोप्तय-क,ख १५- स्थित-ख १६- कजल-ख १७- जातनिमि--ख १८- द्रष्टव्यम्-क १९- विजयिकेतुना-क,ख २०- श्लेषो-क २१- निमित्तत्व (?)-क २२- स इति कपुस्तकेनास्ति, २३- क्षामाता-ख २४- गतावित्यादवपि-ख २५- अपि-क ख २६- अनिमित्तत्वप्रसंगात्-क,ख २७- भस्वता-ख २८- त्वविशिष्टजातिद्रव्य--ख २९- कपालान्मुक्त-ख ३०- त्वविशिष्टजात्यादि--क

कमिति विषयिणोऽपि जात्यादिरूपेण विभागस्यासामंजस्यप्रसंगात् । तस्माद्वि-षयिण इव निमित्तस्यापि जात्यादिरूपेण चतुर्विधतया पुन: प्रत्येकं भावाभावा[1]-भ्यामष्टविधतया च विभाग: कर्तव्य इति[2] न्यून एवायं विभाग: । किं च यद्धे-तूत्प्रेक्षायामनुपादानं निमित्तस्य क्वापि न संभव[3] इति प्रतिश्रुतं[4] तदपि नो चारु ।

'मग्ना सुधायां किमु तन्मुखेन्दोर्लग्ना स्थिता तत्कुचयो: किमन्त: ।
चिरेण तन्मध्यममुंचतास्य[5] दृष्टि: कृशीय: स्खलनाद्भियान्नु ।।'

'इह हेतावुत्प्रेक्ष्ये मज्जनलगने निमित्तमनुपात्तम् ।
तत्कार्यं दृष्टिगतं चिरेण यन्मुखकुचत्यजनम्[6] ।।'

स्यादेतत् । इह मज्जनलगनोत्प्रेक्षयोश्चिरेण मुखकुचत्यागावनुपात्तौ[7] निमित्ते[8] तयोश्च न मज्जनलगने[9] हेतुत्वयोग्ये[10] इति । सत्यम् । तथापि हेतू-[11]त्प्रेक्षैव[12] । न हि हेतुभवनक्षमस्योत्प्रेक्षैव हेतूत्प्रेक्षा, किं तु हेतुत्वेनोत्प्रेक्षा । यथा--'सैषा स्थली यत्र विचिन्वता त्वाम्' इत्यत्र । अत्र हि पंचमी हेतु-त्वप्रतिपादिका । तथा ---

'कपोलफलकावस्या: कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ।।'

इत्यत्र क्षामतागमनं प्रति परस्परादर्शनस्य हेतुत्वोत्प्रेक्षायां शतृप्रत्ययो हेतुत्वप्रतिपादक: ।

'मदनतापभरेण[13] विदीर्य[14] नो यदुदपाति हृदा दमनस्वसु:[15] ।
निबिडपीनकुचद्वययन्त्रणा तमपराधमधात्प्रतिबध्नती ।।'

इत्यत्र हृदयस्य मदनतापेन स्फुटितत्वोत्पतनाभावे[16] कुचद्वययंत्रणाया हेतुत्वोत्प्रेक्षायामुत्पतनप्रतिबन्धकत्वपर:[17] प्रतिबध्नतीशब्द: फलतोऽनुत्पतन-हेतुत्वप्रतिपादक:[18] । एतादृशेषु च फलस्य निमित्तस्योपादानं[19] नियतमेव । अन्यथा पंचम्यादीनामन्वयसंघटनाभावात्[20] । यत्र[21] हेतुत्वप्रतिपादक: शब्दो नास्ति तत्र हेतुभवनक्षमस्यापि स्वरूपोत्प्रेक्षैव ।

अत एवालंकारसर्वस्वकृता-

'प्राप्याभिषेकमेतस्मिन्प्रतितिष्ठासति[22] क्षिणाम् ।
चकम्पे[23] लोक्यमानार्थमय[24]विह्वलितेव भू: ।।'

---

१- भावाभावाभिमानाभ्याम्-क,ख २- 'इति' इति ख पुस्तके नास्ति ३- संभवति-क,ख ४- प्रश्ने -ख ५- ममुञ्चतास्य-ग ६- जात्याजनजात्याजन-ख ७- --त्यागं अनु--ख ८- न इति कपुस्तके नास्ति ९- गणो-ख १०- योगे-ख ११- नेते इत्यधिकं खपुस्तके किञ्च हेतु इत्यारभ्य पंचमी (१२ प०) इत्यन्तं खपुस्तके नास्ति १२- हेतुतुप्रेक्षे-क १३- हरण-ख १४- विदार्य-ख १५- दमन: स्वसु:-ख १६- पातनाभावे-क १७-बन्धकत्व -ख १८- पतनहेतुत्वनहेतुत्वप्रतिपादक:-ख १९- -स्यापा-ख २०-पंचम्यादीनामन्व्य २१- ननु इत्यधिकं कपुस्तके २२- षेकमेतास्मिन्-ख २३- चकचकपे-ख २४- लोक्यमानार्थां-ख

इत्यत्र विच्छलितत्वस्योत्प्रेक्ष्यस्य हेतुत्वप्रतिपादकशब्दरहितस्य कम्पं प्रति हेतुभवनक्षमत्वेऽपि स्वरूपोत्प्रेक्षादाक्षृतेति चेत् । नैवम् ।

एवं हि--

'स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु[1] बन्धनम् ।
च्युतकेसरदूषितेक्षणान्यवतंसोत्पलताडनानि च ।।'

इत्यत्र हेतूत्प्रेक्षा लक्ष्या[2] न स्यात् । स्मरणगतहेतुत्वप्रतिपादकशब्दाभावात् । न चेष्टापत्तिः ।

'कृतवानसि विप्रियं न मे प्रतिकूलं[3] न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै[4] रतये[5] न दीयते ।।'

[6] इत्युक्त्यनन्तरं प्रवृत्तस्यास्य श्लोकस्य, अथ[7] वा[8] मत्पूर्वकृतापराधस्मरणेनैव दर्शनं न दीयते किमिति हेतूत्प्रेक्षापरत्व एव सामञ्जस्यात् । यदि तु[9] हेतुत्वप्रतिपादकशब्दाभावेऽपि पूर्वापरानुगुण्येनापि हेतूत्प्रेक्षा भवेत् तर्हीहापि[10] तृतीयोत्प्रेक्षासमभिव्याहारात्तस्याः चिरेण मध्यत्यजने[11] शब्दोपात्ते स्खलनभय-स्यैवाद्योत्प्रेक्षयोरपि[12] निमित्ततया गम्यमाने चिरान्मुखकुचत्यजने मज्जनस्य लग्नस्य च हेतुत्वेनोत्प्रेक्षणमित्येव युक्तम् । यत्रापि हि फले फलत्वप्रतिपादक-शब्दस्तत्राप्यौचित्येन[13] फलोत्प्रेक्षामवधीर्य हेतूत्प्रेक्षाङ्गीकार्या[14] दृश्यते । यथा--

'हृत्तस्य[15] यन्मन्त्रयते[16] रहस्त्वां[17] तदुक्तमामंत्रयते मुखं यत् ।
तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य ।।'

अत्र हि हृदयकृतरहस्यमंत्रणोद्भेदनप्रत्यवमर्शकेन[18] तच्छब्देन सख्यौचितीशब्दस्य कमर्थिकष्यन्तस्य सामानाधिकरण्याच्छब्दतो रहस्योद्भेदनस्य मुखगतहृदयवैरिमन्मथसुहृच्चन्द्रसख्यकार्यत्वं प्रतीयते । तथापि तत्र सख्यस्य[19] रहस्योद्भेदनं प्रति हेतुत्वेनैवोत्प्रेक्षा, न तु रहस्योद्भेदनस्य[20] सख्यफलत्वेन । रहस्योद्भेदनं[21] फलमुद्दिश्य सख्यं कृतमित्युत्प्रेक्षाया[22] असामञ्जस्यात्[23] । हेतुत्वमात्रेण हेतूत्प्रेक्षाया इव तदुद्देशं विना कार्यत्वमात्रेण फलोत्प्रेक्षाया अनिर्वाहात् । एवं यत्र हेतौ हेतुत्वप्रतिपादकः शब्दस्तत्रापि क्वचिदौचित्येन हेतूत्प्रेक्षामवधीर्य[24] फलोत्प्रेक्षाङ्गीकार्या दृश्यते । यथा --

---

१- स्खलनेषु-क,ख,ग २- लक्ष्या इति क-खयोः नास्ति ३- प्रतिकूलेन-ख किंच 'न' इति नास्ति ४- विलपन्त्यो-घ गपुस्तके तु नास्ति ५- रयते घ, गपुस्तके तु नास्ति ६- इति पूर्वश्लोकेन किमित्यकारणमेव दर्शनं न दीयते इत्यधिकं क पुस्तके, ७- अथा-ख ८- वा, इति खपुस्तकेनास्ति ९- तत्र क खपुस्तके तु नास्ति १०- तर्हि ति पुस्तके नास्ति- भवेदेक्यापि तृतीयो--ख- ११- मध्येत्यजने-ख १२- स्येवाद्यो-क १३- स्तत्राथौचित्येन-क १४- अंगीकार्यदिश्यते-ख १५- हृतेस्य-ख १६- यत् इति खपुस्तके नास्ति १७- रहस्याव्यक्त-ख १८- प्रत्यक्ष इत्यारभ्य दृभेदन (प्रत्यक्तो) इत्यन्तं खपुस्तके नास्ति १९- सख्येस्य-ख २०- हरस्योद्भदनस्य -घ २१- रहस्योद्भदनं -क २२- इति इति खपुस्तकेनास्ति २३- असामंजस्य इत्यारभ्य --प्रेक्षाया (परे प०) खपुस्तकेनास्ति २४- -मवधार्य-क

'स्माराशुगीभूय विदर्भसुभ्रूवदा[1] यददाोमि खलु प्रसूनैः ।
स्रजं सृजन्त्या तदशो[2]थि[3] तेषु यत्रैकया सूचिशिखां निखाय ।।'

अत्र निखनने पूर्वकालत्वरूपकारणत्वप्रतिपादकक्त्वाप्रत्ययसद्[4]भावेऽपि[5] न तद्वैरशोधनं प्रति हेतुत्वेनोत्प्रेक्ष्यं किं तु वैरशोधनार्थं निखननमिति वैरशोधनमेव फलत्वेनोत्प्रेक्ष्यम् । सिद्धासिद्ध[6]योरसिद्धस्योत्प्रेक्षणीयत्वात्[7] । इह तदुद्देश्योत्प्रेक्षणसंभवाच्च । यथा वा---

'अस्यैव सर्गाय भवत्कर[8]स्य सरोजसृष्टिर्मम[9] हस्तलेखः ।
इत्याह धाता हरिणेक्षणायां किं हस्तलेखीकृतया तयास्याम् ।।'

अत्र हस्तलेखीकृतया सरोजसृष्ट्येति करणविभक्तिसद्भावेऽपि न सा विधातृकर्तृकसरोजसृष्टिगतहस्तलेखत्वप्रकाशनं प्रति हेतुत्वेनोत्प्रेक्ष्यते[10], किं तु तत्प्रकाशनार्थं सरोजसृष्टि[11]हस्तलेखकरणमिति तत्प्रकाशनमेव फलत्वेनोत्प्रेक्ष्यम् । किं बहुना यत्र हेतुत्वप्रतिपादकः शब्दस्तस्यैव फलत्वमौचित्येन क्वचिदंगीकार्यं दृश्यते । यथा--

'स्तनावालोक्य तन्वंग्याः शिरः कम्पयते युवा ।
तयोरन्तरनिर्मग्नां[12] दृष्टिमुत्पाटयन्निव ।।'

अत्र शत्रु[13]हेतौ विधानेऽपि फलस्या[14]प्युद्देश्यतया कथंचिद्धेतुत्वमित्युपपाद्य फलोत्प्रेक्षांगीकरणीया । एवं च फलत्वादिप्रतिपादनमप्यनादृत्य हेतूत्प्रेक्षादिकमौचित्येनांगीकार्यं तदा किमु वक्तव्यं विरोधिशब्दाभावे औचित्यानुसरणं[15] कार्यमिति । एवमनया दिशान्यत्रापि निमित्तानुपादानं संभवदूहनीयम् । अपि च ---

'यथोपात्तनिमित्तत्वमनुपात्तनिमित्तता ।
प्रत्येकं वर्तते तद्वत्समुच्चित्यापि दृश्यते ।।'

यथा--

'मुनिद्रुमः कोरकितोऽसितद्युतिर्वनेऽमुनामन्यत सिंहिकासुतः ।
तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किल वैधवं वमन् ।।'

अत्र कोरकनिर्गमनविशिष्टस्य मुनिद्रुमस्य विधुकलाकलापवमनविशि[16]ष्ट-

---

१--कुसुमे यद--ख २- तदशोभि-घ ३- केषु ख ४- त्वाप्रत्यय--ख ५- अपि इति कपुस्तकेनास्ति ६- सिद्धासिद्धयोरपि सिद्धस्या--घ ७- प्रेक्ष्यत्वात्-क ८- रसोज--ख-९- ममु-ख १०- हेतुत्वेनोत्प्रेक्षा-क,ख ११- सरोजसृष्टेहस्त--क सरोजसृष्टोहस्त ख १२- तयोरन्तरनिर्मग्ना-क, तयोरंतरनिर्मदग्ना-ख १३- सतुहेतौ-ख १४- फलत्वस्याप्यु--क, फलस्या--ख १५- औचित्यानुशरण-घ १६- कलापवनविशिष्ट--ख

राद्रूपत्वे उत्प्रेक्ष्यमाणे विशिष्योत्प्रेक्षा निमित्तमसितवर्णत्वमुपात्तम् वि-शेषणोत्प्रेक्षा निमित्तं तु कोरकविधुकलासाधर्म्या[1]दिरूपं नोपात्तम् । यथा वा--

"त्वत्प्रा[म]णे सुन्दर पाण्ड्यदेव मतङ्गजाः शृंखलिनो विभान्ति[2] ।
आवासदानादरिभूपतीनामाशान्तशैला इव सापराधाः ।।"

अत्र विशेषणभूतसापराधत्वोत्प्रेक्षा निमित्तं शृंखलितत्वमुपात्तम्, विशे-ष्यशैल[3]रूपत्वोत्प्रेक्षा निमित्तमौन्नत्यादिकं नोपात्तम् । यथा वा--

"अजस्रभूमीतटकुट्टनोत्थितैरुपास्यमानं चरणेषु रेणुभिः ।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः ।।"

अत्र विशेष्यभूतचेतोरूपत्वोत्प्रेक्षायामणिमाङ्कितैरिति निमित्तमुपात्तम् । अध्ययनार्थमागतैरिति त[त्]द्विशेषणोत्प्रेक्षायामपि चरणोपासनारूपं निमित्तमु[4]-पात्तम् । रयप्रकर्षेत्यध्ययनविशेषणे[5] निमित्तं चेतसां वर्णनीयादश्वादपकृ-ष्टरयत्वं नोपात्तम् । एवमन्यत्रापि निमित्तोपादानानुपादानसमुच्चये उदाहर्त-[6]व्यम् । तस्मान्न्यून: सतृणाभ्यवहारश्चायं विभागः । अतोऽत्र विषयिणो जात्यादिरूपेणाष्टधा विभागम्, धर्मस्य गुणक्रियारूपेण विभागं चापहाय वि-भागान्तरलभ्या यावन्तो भेदास्तावन्त एव चमत्कारिण[7]: ।

[8]स्वरूपहेतुफलोत्प्रेक्षासु तु विधान्तरेणाप्यवान्तरभेदाः संभवन्ति । यथा-- स्वरूपोत्प्रेक्षा द्विविधा, अविशिष्टोत्प्रेक्षा विशिष्टोत्प्रेक्षा[9] च । यत्र विषयिणो विशेषणमुपात्तमपि नोत्प्रेक्षणीयमवगम्यते तद्विषयरूपस्य तन्निमित्तरूपस्य वा विषयविशेषणस्याभावात् किं तु तद्विशेषणं विषयिणि विधान्तरेणोपयुज्यते सा[10] अविशिष्टोत्प्रेक्षा । यत्र तु विषयिणो विशेषणमप्युत्प्रेक्षणीयमवगम्यते तद्वि-षयरूपस्य तन्निमित्तरूपस्य वा विषयविशेषणस्योपादानात्सा विशिष्टोत्प्रेक्षा ।

तत्राद्या यथा--

"रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण[11] ।
काकुत्स्थमालोकयतां नृपाणां[12] मनो बभूवेन्दुमतीनिराशम्[13] ।।"

अत्र मदनरूपत्वोत्प्रेक्षायां मदनाकृतिशालित्वमस्ति निमित्तम् । अत-स्तावदुत्प्रेक्षणीयमवगम्यते[14] तत्प्रत्यर्पणं रत्यनुनयप्रसन्नेन परमेश्वरेण कृत-मिति विशेषणांशस्तु[15] नोत्प्रेक्षणीयोऽवगम्यते । तदंशे विषयस्य वाच्यस्य[16]

---

१- साधस्यादि--ख २- विभाति-ख ३- शैरूपत्वो--ख ४६-- सनात्मनिमित्तं-क
५- विशेषणे तु-ख ६- उदाहर्तव्य:-क, ख ७- चमत्कारकारिण:-क, चमत्कारि-ख ८०किञ्च--णीयमवगम्य--विशेषणस्य इत्यधोलिखितः ख अंश: अत्र सन्निविष्ट:
८- स्वरूप इत्यारभ्य उत्प्रेक्षा इत्यन्तं (पदपंक्तौ) खपुस्तकेनास्ति ९- विशिष्टो इत्यारभ्य विशेषणस्य (१६ पंक्तौ) इत्यन्तं खपुस्तकेनास्ति १०- सा विशिष्टोत्प्रेक्षा-
११- निदेश्व--ख १२- नृणां-ख १३- बभुवन्दुमती--ख १४- प्रेक्षणीयमवगम्य-ख
१५- तद्विशेषणांशस्तु-क,ख १६- विषयस्य च वाच्यस्य-ख ।

गम्यस्य वा निमित्तस्य [redacted] वा अलाभात्[1] । किं तु परमेश्वरदग्धस्य मदनदेहस्यासुरदग्धस्य कचदेहस्य शुक्र इव न कश्चिदन्य:[2] प्रत्यर्पणं कर्तुं शक्नोतीति विषयिणि प्रत्यर्पणोपपादकतया तद्विशेषणमुपयुज्यते इत्यविशिष्टोत्प्रेक्षेयम्[3] ।

विशिष्टोत्प्रेक्षायां "मुनिद्रुम:[4] कोरकितोऽसितद्युति:" "त्वत्प्राङ्गणे सुन्दर पाण्ड्यदेव" इत्याद्युदाहरणे विषयोपादानाद्विषयिविशेषणस्योत्प्रेक्षा तावगम्यते । द्वितीये निमित्तोपादानाद्धेतुफलोत्प्रेक्षा त्वसिद्धयो: सिद्धयोर्वा हेतुफलभावेनोत्प्रेक्षणीयतया प्रत्येकं द्विविधे । "सैषा[5] स्थली यत्र विचिन्वता त्वाम्" "चोलस्य यद्भीतिपलायितस्य" इत्यादिषु नूपुरकण्टकिद्रुमादावसिद्धयोर्विश्लेषद्व: खललाटलिपिदर्शनादिकयो[6]र्हेतुफलभावेनो[7]त्प्रेक्षणीयता ।

"आलोहितलतलावेतौ क्षितौ विक्षेपणादिव ।
वर्णयेम कथं तन्व्या: पादौ पल्लवकोमलौ[8] ।।"

"पूरं विधुर्वर्धयितुं पयोधे: शङ्केऽयमेणाङ्कमणि[9]: कियन्ति ।
पयांसि दोग्धि प्रियविप्रयोगात्सशोककोकीनयने[10] क्रियन्ति ।।"

इत्यादिषु पादचन्द्रादौ स्वत:सिद्धयोरेव विक्षेपपयो[11]वर्धनादिकयोर्हेतुफल[12]भावेनोत्प्रेक्षणीयता । प्रकारान्तरेणापि कतिचिदस्या[13] भेदान्[14]समासोक्तिप्रकरणे दर्शयिष्याम:[15] ।

यत्तु[16] सर्वस्वकृता वैचित्र्यान्तर[17]मस्या दर्शितम् । सा क्वचिद्धर्मविषये श्लिष्टा, क्वचिच्छलादिशब्देन[18] सापह्नवा, क्वचित्पदार्थान्वयवेलायां[19] सादृश्याभिधानादुपमाक्रान्ताप्युपमावाक्यार्थतात्पर्यसामर्थ्यादभिमातृ[20]व्यापारौचित्यक्र[21]मेणोत्प्रेक्षायां पर्यवस्यतीत्युपमोपक्रमा चेति । तत्र धर्मविषये श्लिष्टत्वं किमित्युपन्यस्तम् । किं धर्मस्य निमित्तानुगामितयैव श्लेषेणापि निर्वाह्यत इति, किं वा धर्मांशेषु[22] शुद्धतेव श्लेषेणालंकृतापि[23] दृश्यत इति । आद्ये उपमायां साधारणधर्मस्यानुगामित्वादयो यावन्तो भेदा: साधारण्यनिर्वाह[24]कास्ते सर्वेऽप्युत्प्रेक्षायां धर्मस्य निमित्ततानिर्वाहका: संभवन्तीति न्यूनो विभाग: । तथा हि "बालेन्दुवक्राण्यविकाशभावात्" इत्यादौ तावदनुगामित्वं स्पष्टम् । तथा---

---

१- चाभावात्-ख, वालाभात्-घ २- किश्चिदन्य:-क, कश्चिदन्या-ख ३- विशिष्टोत्प्रेक्षोपम् इति खपुस्तकेनास्ति ४- द्रुमि:-ख ५- सौण-ख ६- दिकयोर्हेतु--ख ७-- फलाभावेन ख, घ ८- पादककोमलौ-ख ९- शकेयवेमपिा:-ख १०- सशोकशोणी-ख ११-पयोधिवर्द्धना--ख १२- फलाभावेम-ख,घ १३- अस्य-ख १४- भेदुनु-ख १५- दर्शयिष्यामा:-ख १६- यान्तु-ख १७- वैचित्र्यन्तर-ख १८- क्वचित् इति कपुस्तकेनास्ति १९- क्वचिल(?) तादिश--ख १९- वेलाया-ख २०-अभिमन्तु--क,ख २१--रौह्कि---ख २२- धमांशि-क,ख २३- अलंकृततापि-ख २४- साधारणर्णिवा--ख ।

'व्याराजत सखे तन्व्या[1] वक्त्रं वलितकन्धरम् ।
लावण्यौघजलावृत्त[2]नालदण्डमिवाम्बुजम् ॥'

इत्यत्र वस्तुप्रतिवस्तुभावः । बिम्बप्रतिबिम्बभावादयस्तु प्रागेवोदाहृताः । द्वितीये निमित्तांशेन[3] श्लेषेणैवालंकारान्तरेणा[4]प्यलंकृतता दृश्यते इति न्यूनो विभागः । तथा हि 'अंगुलीभिरिव केशसंचयम्' इति निमित्तांशे उपमालंकारः स्पष्टः ।

'उदरं परिमिति मुष्टिना कुतुकी[5] कोऽपि दमस्वसुः[6] किल[7] ।
धृततच्चतुरंगुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः ॥'

इत्यत्रोत्प्रेक्षा । अत्र दमयन्त्युदरस्य केनचित्कुतुकिना परिमीयमाणत्वो-[8]त्प्रेक्षायां काञ्चीसहितासु वलीषु तदीयांगुलित्वोत्प्रेक्षा लब्धमुदरगतं च तदीयांगुलि[9]चतुष्टयधारणं निमित्तम् ।

'अजस्रमारोहसि दूरदीर्घां[10] संकल्पसोपानततिं तदीयाम् ।
श्वासान्स वर्षत्यधिकं पुनर्यद्ध्यानादिव[11] त्वन्मयतामवाप्य ॥'

इत्यत्रासंगतिः[12] । यतोऽत्र नलस्य दमयन्तीरूपतावाप्त्युत्प्रेक्षायां दमयन्तीकर्तृकेण सोपानारोहणेन नलस्य श्वासवर्षणं निमित्तम् ।

'प्रतीपभूपैरिव[13] किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत[14] ॥'

इत्यत्र विरोधाभासः । अत्र हि विरुद्धधर्मगतस्याश्रय[15]भेदकत्वत्यागोत्प्रेक्षायां विरुद्धतयावभासमानधर्माणां नले सहवासो निमित्तम् ।

'ध्रुवमधीतवतीयमधीरतां[16] दयितदूतपतङ्गगतिवेगतः[17] ।
धृतिविरोधकरीं कृशोदरी तदुदितः स हि यो यदनन्तरः[18] ॥'

इत्यत्रार्थान्तरन्यासः । यद्यप्यत्र दमयन्तीगतस्य चापलस्य नलदूतहंसपक्षावेगो हेतुत्वेनोत्प्रेक्ष्यते, तथापि तत्रोत्प्रेक्षायामध्ययनफलमात्रं[19] न निमित्तं किं त्वन्यवेगात्कथमन्यत्र चापलमिति शंकावारणाय निबद्धेन 'तदुदितः स हि यो यदनन्तरः' इत्यर्थान्तरन्यासेनोपस्कृतम् । एवम्---

'गौरीव पत्या सुभगा कदाचित्कर्त्रीयमप्यर्धतनूसमस्याम् ।
इतीव मध्ये विदधे विधाता रोमावलीमेचकसूत्रमस्याम्[20] ॥'

---

१- तस्या-क २---जमावृत--क ३- निमीत्ता--ख ४- श्लेषेण वालंकारान्तरे--क,घ ५- कुटकी-ख ६- दमस्वसु-ख ७- किमु-क,ख ८- परिमीयणत्वो--क ९- तदगुलि--क १०- दीर्घ-ख ११- ध्यानान्तव-क,ख १२- असंयति:-ख १३- भूपौरिव-ख १४- दृवकार(?)-क १५- -स्वाश्रय (?)-क १६- ध्रुवमधीत--ख १७- गतवेगत:-क १८- हित-ख १९- चापलमात्रं-क, प्रेक्षायां फलमात्रं-ख २०-अस्या-क

इत्यत्र निमित्तांशे रूपकमित्याद्यूहनीयम् । तस्मादुभयथापि तत्र श्लिष्टत्वमात्रकीर्तनं न्यूनमितरेषामप्युपलक्षणं द्रष्टव्यम् ।

यत्तु सापह्नवत्वे[1]---

'गतासु तीरं तिमिघट्टनेन ससंभ्रमं पौरविलासिनीषु ।
यत्रोल्लसत्फेनलवच्छलेन[2] मुक्ताट्टहासेव विभाति शिप्रा[3] ।।'

इति[4] स्वरूपोत्प्रेक्षायामुदाहृतं तदपि हेतुफलोत्प्रेक्षयोरपि सापन्हवत्वे उपलक्षणं बोद्धव्यम् । तत्र सापह्नवहेतूत्प्रेक्षायाम् ---

'मुग्धः स मोहात्सुभगा[5]न्निदेहाद्ददद्भवभ्रूरचनाय चापम् ।
भ्रूभंगजेयस्तव[6] यन्मनोभूरनेन रूपेण यदा तदासीत् ।।'

अत्र मदनगते मुग्धशब्दवाच्यत्वे वस्तुतोहेतोः[7] सौन्दर्यस्य[8] हेतुत्वमपन्हुत्य नलभ्रूरचनाय स्वचापादानप्रयुक्तस्य मौढ्यस्य हेतुत्वमुत्प्रेक्षितम् । सापन्हवफलोत्प्रेक्षा यथा--

'रवितप्तो गजः पद्मांस्तद्दुःख्यान्वाधितुं ध्रुवम् ।
सरो विशति न स्नातुं गजस्नानं हि निष्फलम् ।।'

अत्र गजस्य सरः प्रवेशं प्रति वस्तुतः फलस्य स्नानस्य फलत्वमपन्हुत्य पद्मबाधनमत्र[9] फलत्वेनोत्प्रेक्षितम् । न च स्वरूपोत्प्रेक्षायां[10] वास्तवविषयस्वरूपापन्हव एव विच्छित्तिविशेषो[11] न तु हेतुफलोत्प्रेक्षयोः[12] प्रसिद्धहेतुफला[13]पन्हव इत्यस्ति । प्रत्युतोदाहृतयोर्हेतुफलोत्प्रेक्षयोः सिद्धहेतुफलापन्हवोऽपि सहेतुकः न तूदाहृतविषयः[14] स्वरूपापन्हववत्[15] निर्हेतुक इत्यत्रैव चमत्कारातिशयसत्त्वात् । तस्मादिमे अपि सापन्हवोत्प्रेक्षे इत्युपलक्षणतैव युक्ता । अन्य[16]दत्र विचारणीयं समासोक्तिप्रकरणे विचारयिष्यते ।

यत्तु 'कस्तूरीतिलकन्ति[17] भालफलके' इत्यादावुपक्रान्ता उपमा औचित्यादुत्प्रेक्षायां पर्यवस्यतीत्युक्तं तत्र भाला[18]दिस्थानविशेषसंबन्धस्य कस्तूरीतिलकादितादात्म्यमात्रे औचित्यं चेत् रूपके पर्यवसानं[19] स्यादिति तस्य तादात्म्यसंभावनायामौचित्यसुगम्योत्प्रेक्षायां पर्यवसानं वाच्यम् । तथा च--

'रक्षन्तु त्वामसितजलजैरञ्जलिः पादमूले
मीना नाभीसरसि हृदये कौस्तुभाख्या[20] मुरारेः ।

---

१- सापह्नवत्वं-क २- फेनतति--क, यत्रोल्लसत्फेनततिलेन-ख ३- शिप्रा इति खपुस्तके नास्ति ४- इति इति ख पुस्तके नास्ति ५- सुभगाच-क,ख,ग,घ ६- स्तप-ख ७- वस्तुतोऽहेतोः-ग,घ ८- सौन्दर्यहेतुत्व-क ९- बाधनं प्रति-क १०- प्रेक्षायां-क ११-विच्छित्तिविशेषो-क,घ १२- फलोत्प्रेक्षयोः-ख,घ १३- प्रसिद्ध-क १४- तुदाहृत--ख १५- स्वरूपापन्हववत हेतुत्प्रेक्षायां प्रप्रकरत्व, इत्यत्रैव--ख घपुस्तके तु स्वरूपापन्ह-इत्यारम्य सापन्हवोत्प्रेक्षे (परपंक्तौ) इत्यन्तं नास्ति । अपिच तत्र सापन्हवोत्प्रेक्षे इत्यस्य स्वरूपापन्हवोत्प्रेक्षे इति पाठः । १६-अन्यच्चात्र-क,ख १७- तिलक -ख १८- फलादिस्थान-ख १९- अपि इत्यधिकं कपुस्तके २०-मारबाणा -क,ख

हारा: कण्ठे हरिमणिमया[1] बक्रपद्मे[2] द्विरेफा:
पिच्छाचूडा शिखरनिकरे घोषयोषित्कटाक्षा: ।।

इत्यादौ रूपकप्रतीतिस्थलेऽप्युत्प्रेक्षापगन्तव्या । तथा--

पतत्रिणा तद्रुचिरेण वञ्चितं[3] श्रिय: प्रयान्त्या:[4] प्रविहाय पल्वलम् ।
चलत्पदाम्भोरुहनूपुरोपमा चुकूज कूले कलहंसमण्डली ।।

लोकाश्रयो मण्डपमादिसृष्टिर्ब्रह्माण्डभाण्डत्यनुकार्यमस्य[5] ।
स्वकान्तिरेणूत्करवान्तिमन्ति[6] घुणव्रणद्वारनिभानिभानि ।।

अथाजिनाषाढधर:[7] प्रगल्भवाग्ज्वलन्निव[8] ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्ध:[9] प्रथमाश्रमो[10] यथा ।।

इत्यादावुपमाप्रतीतिस्थले[11] यथोत्प्रेक्षायां पर्यवसानम् । एवम्--

वरण: कनकस्य मानिनी दिवमंकादमराद्रिरागताम् ।
घनरत्नकवाटपक्षति:[12] परिरभ्यानुनयन्नुवास[13] याम् ।।

स्वधाकृतं यत्तनयै: पितृभ्य: श्रद्धापवित्रं तिलमिश्रमम्भ: ।
चन्द्रं पितृस्थानतयोपतस्थे[14][15] तदंकरोचि:[16] खचिता सुधैव ।।

इत्यादिरूपकप्रतीतिस्थलेऽपि तस्यां पर्यवसानमुपगन्तव्यम्[17] । तादात्म्यसंभावनोपयुक्तविशेषणनिबन्धरूपन्यायसाम्यात् । एवम्--

पूर्णेन्दो: परिक्षीणकान्तवपुष:[18] स्फारप्रभाभासुरं
नेदं मण्डलमभ्युपैति गगनाभोगाज्जिगीषोर्जगत् ।
कामस्योच्छ्रितमातपत्रमधुना[19] पाण्डुप्रदोषश्रिया
मानोन्नद्धजनाभिमानदलनोद्योगैकहेवाकिन: ।।

इत्यपन्हुत्युदाहरणे एषापि[20] द्रष्टव्यम् । अधिकं[21] निदर्शनालंकारप्रकरणे चिन्तयिष्यते[22] ।

ननु गम्योत्प्रेक्षाया[23] अलंकारतया परिगणनमयुक्तम्[24] । तस्या अलंकारध्वनित्वात्[25] । उच्यते । विषयविषयिनिमित्तेषूपात्तेषु[26] केवलमिवादिवाचका-

---

१- माणिमाया-ख २- पद्मं-ख ३- वर्जितं-क,ख ४- प्रद्यान्त्या--ख ५- -काद्यमस्य-क
६- अयं श्लोकार्ध: ख-ग-घ-पुस्तकेषु नास्ति ७- अयं श्लोकार्ध: खपुस्तके नास्ति ८- प्रगल्भवागुज्वलनिव-क ६- शरीरवध-ख १०- प्रथमाश्रयो-क ११-इत्यादावुपमा--क
१२- घन-ख १३- -नुनीय-ख १४- पितरस्यातयोप-क १५- पतस्थाने-ख १६- तदंग ग घ
१७- अभ्युपगन्तव्यम्-क १८- परिवेष--क १६- कामस्योर्जित--क २०-अथ इत्युत्प्रेक्षाप्रकरणम् समाप्यप्रथाय सप्तक लभ्यमानोग्रन्थ: । उपमा सदृटोपमेयोपमया 3 थानन्वय: स्मरणम् । रूपकपरिणतिसंशयभ्रान्तिमदुल्लेखनिन्हवोत्प्रेक्षा: ।।इति प्रतिपाद्यालंकारसूची इति ग पुस्तके
२१-शेष-क १२- वक्ष्यते-क २३- प्रेक्षाया:-क २४- गननम्-क २५- उत्प्रेक्षा ध्वनि--क
२६-निमित्तेष्वाप्युपात्तेषु-क

प्रयोगमात्रेण[1] यत्रोत्प्रेक्षावगम्यते[2] सात्यन्तं[3] स्फुटत्वाद्वाच्यायमानत्वादलंकार-[4]
तामेवासादयतीति । यथोदाहृतम् । यत्रोत्प्रेक्षणीयस्य विषयिणोऽप्यनुपादानं[5]
निबद्धेन वस्तुनालंकारेण वा गम्योत्प्रेक्षा, गूढा तत्रैवोत्प्रेक्षाध्वनिः । यथा--

[6]
वीराः भटान्दृष्ट्वा जयलक्ष्म्यावृतान्रणे ।
कर्षन्त्यरिवधूकेशान्कानने कण्टकिद्रुमाः ।।

अत्र वस्तुना कचग्रहणरूपेण[7] जयश्रीसमालिंगितभटदर्शनोद्दीपितमन्युतया[8]
इवेत्युत्प्रेक्षा ध्वन्यते ।

वेलामतिक्रम्य पृथुर्मुखेन्दोरालोकपीयूषरसेन तस्याः ।
नलस्य रागाम्बुनिधौ विवृद्धे तुंगौ कुचावाश्रयति स्म दृष्टिः ।।

अत्रैकदेशविवर्तिरूपके मज्जनभयादिवेत्युत्प्रेक्षावगम्यते । एवमन्यत्रा-
प्युदाहार्यम् ।

इत्युत्प्रेक्षाप्रकरणम्[9] ।

अथातिशयोक्तिः -

तस्यास्तावत्--

विषयस्यानुपादानाद्विषय्युपनिबध्यते ।
यत्र सातिशयोक्तिः स्यात्कविप्रौढोक्तिजीविता ।।

इति लक्षणमुक्त्वा चातुर्विध्यं वर्णयन्ति । भेदेऽभेदः, अभेदे भेदः,
संबन्धेऽसंबन्धः, असंबन्धे संबन्ध इति । एतेषामुदाहरणानि--

कमलमनम्भसि कमले[10] कुवलयमेतानि[11] कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ।।

अन्येयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी ।
नैषा कमलपत्राक्षी[12] सृष्टिः साधारणी विधेः ।।

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
श्रृंगारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।

---

१- -मात्रात्-क २- गम्यते-क ३- तत्र इत्यधिकं कपुस्तके ४- वाच्यायमानालंकारता-क
५- अनुपादानात्- क- ६- लक्ष्मीवृतान्-क ७- गुहरूपजयश्री -क८- पृथु-क ९- चित्रमीमांसा-
याम् इत्यधिकं गपुस्तके १०- च इत्यधिकं कपुस्तके ११- कुवलये तानि-क १२- नलिनपत्राक्षी
-क

वेदाभ्यासजड: कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनि: ।।

दाहोऽम्भ: प्रसृतिंपच: प्रचयवान्बाष्प: प्रणालोचित:
श्वासा: प्रेङ्खितदीप्तदीपकलिका[1]: पाण्डिम्नि मग्नं वपु: ।
किं चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्या[2]: स्थितिर्वर्तते ।।

अत्र कमलादीनां मुखादिभेदेऽप्यभेद: । रूपादीनां लोकसिद्धरूपाध-भेदेऽपि[3] भेद: । रूपस्य पुराणप्रजापतिसृष्टिसंबन्धेऽप्यसंबन्ध: । विरहादीना-मम्भ: प्रसृतिंपचत्वाद्यसंबन्धेऽपि संबन्धश्च क्रमेण निबद्ध: । अत्रेदं विचार्यते । विषयस्यानुपादानादित्यत्र किमनुपादानं सर्वथैव विषयस्य प्रतिपादकाभाव:, तद्वाचकाभावो वा । आद्ये "कमलमनम्भसि" इत्यादावपि[4] लक्षणं न स्यात् । कमलादिशब्दानां लक्षणया विषयभूतमुखादिप्रतिपादकत्वात् । द्वितीये "चुम्बतीव रजनीमुखं शशी" इत्यादिषु मुखशब्दादिश्लेषमूलातिशयोक्ताव-व्याप्ति: । विषयिवाचकातिरिक्तविषयप्रतिपादकाभावो विवक्षित इति चेत्, तथापि "उन्मीलितानि नेत्राणि पद्मानीवोदिते[5] रवौ" इत्यादावुन्मीलितशब्द-वाच्यलक्ष्यार्थाध्यवसायरूपातिशयोक्ताव्याप्ति[6]: । तत्रोन्मीलितशब्दस्य विषयीभूतविकाशलक्षकतया तद्वाचकातिरिक्तस्यैव विषयप्रतिपादकत्वात् । विषयिप्रतिपादकातिरिक्तविषयप्रतिपादकाभावविवक्षायामपि---

"पल्लवत: कल्पतरोरेष विशेष: करस्य ते वीर[7] ।
भूषयति कर्णमेक: परस्तु कर्णं तिरस्कुरुते ।।"

इत्यत्र कर्णशब्दश्लेषमूलातिशयोक्ताव्याप्ति: । तत्र विषयविषयिणो: पृथक्कर्णपदोपादानाद्[8] विषयिप्रतिपादकविलक्षण[9]विषय[10]प्रतिपादकाभावो वा वि-वक्षित इति चेत्, तथापि---

"उरोभुवा[11] कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम् ।
त्रपासरिद्दुर्गमपि प्रतीर्य सा[12] नलस्य तन्वी हृदयं विवेश यत्[13] ।।"

---

१- दीपदीप्त-क २- तस्या-क ३- अपि इति कपुस्तकेनास्ति ४- इत्यादाविदं-क ५- पद्मामानीवोदि--क ६- अतिव्याप्ति: -ख,ग,घ ७- वीर:-क ८- कर्णपादो-क ९- विषयप्रतिपादक--घ १०- विषय इति कपुस्तकेनास्ति ११- [redacted] उरोभुवा-क १२- यत्-क १३- सा-क ।

इत्यत्र कुचद्वये कुम्भयुगाभेदाध्यवसायरूपातिशयोक्तावव्याप्तिः[1]। तत्रोरःप्रभवत्वाकारेण[2] विषयप्रतिपादकस्य विषयिप्रतिपादकविलक्षणस्य सद्भावात्[3]। ननु विषयिप्रतिपादकविलक्षणस्य विषयतावच्छेदकप्रकारेण विषयप्रतिपादकस्याभावो विवक्षितः, उरःप्रभवत्वं तु न पयोधरयोर्विषयतावच्छेदकमनेकसाधारणत्वादिति चेत्, एवमपि---

"ध्वान्तस्य वामोरु विचारणायां वैशेषिकं चारु मतं मतं मे[4]।
औलूकमाहुः खलु दर्शनं यत्क्षमं तमस्तत्त्वनिरूपणाय[5]॥"

इत्यादावुलूकदर्शनमिति[6] वैशेषिकमते पक्षिविशेषदृष्ट्या भेदाध्यवसायरूपातिशयोक्तावव्याप्तिर्दुर्वारा। तत्र वैशेषिकमतमिति विषयतावच्छेदकप्रकारेण विषयप्रतिपादकस्य संभवात्। अपि चैवम् "रामरावणयोर्युद्धम्" इत्यनन्वयालंकारे चातिव्याप्तिः। तत्र विषयिप्रतिपादकविलक्षणविषयप्रतिपादकाभावात्[7]। ननु यत्र कश्चिदभेदेनाध्यवसीयते स विषयः, यस्तु तथाध्यवसीयते स विषयीति विषयविषयिभावोऽत्र विवक्षित इति नोक्तातिव्याप्तिरिति चेत्, एवमपि "विद्वन्मानसहंस" इत्यादिश्लिष्टरूपकेऽतिव्याप्तिर्दुर्वारा[8]। रूपके ताद्रूप्यारोपमात्रम्; अतिशयोक्तावभेदाध्यवसाय[9] इति कल्पना तु रूपकलक्षणविचार[10] एव निरस्ता। साद्रूप्यनिबन्धनसमासोक्त्युदाहरणेषु[11] चातिव्याप्तिः[12]।

"अप्पय्यचित्रमीमांसा[13] न मुदे कस्य मांसला[14]।
अनूरुरिव घर्मांशोरर्धेन्दुरिव[15] धूर्जटेः॥"

समाप्तश्चायं समुपलभ्यमानो ग्रन्थः।

-----

१- अव्याप्तेः-क २- प्रतुभवत्वाकारेण-क ३- संभवात्-क ४- नः -क ५- निरूपणायाम्-क ६- -वालुकदर्शन--क ७- विषयप्रतिपादकविलक्षण-घ- ८- दुर्निवारा-क ९- नातिशयोक्ता--क १०- रूपकविचारलक्षण-ख,ग,घ ११- अप्रस्तुतप्रशंसोदाहरणेषु-क, १२- अथ उपमा सदोपमेयोपमयाथानन्वयःस्मरणं। रूपकपरिणतिसंशयभ्रान्तिमदुल्लेखनिह्नुतिप्रदाः। इति कपुस्तके १३- अप्पयं (?)-क १४- मांसाला-क १५- तीक्ष्णांशो--क।

--

## English Translation

> Having paid homage to Mahādeva (lit. one who has the moon on his head), the spouse of Gaurī, the first and foremost light, I (proceed to) compose a treatise on the figures of speech based on varieties of ideas, having a wide range and clarity of theme.

Literature is of three types, namely, Dhvani (Suggestion), Guṇībhūtavyaṅga (with Suggestion as Subordinate) and Citra (Embellished).

Now, that is to be designated as Dhvani (kāvya) where the suggested sense is more prominent than the expressed sense. As for example,

> The drops of the first shower (when the season set in) stood for an instant on her (thick) eye-lashes, hit her lips, were pulverized by falling on her rising breast, were obstructed in the wrinkles (round her middle), and entered the navel after a long while.

Here, the position befitting the state of meditation of the goddess is revealed by the description of the natural movement of the first rain-drops on the body of the goddess, practising penance, and thereby, the state of meditation, undisturbed even at the advent of the first rain, which causes agitation owing to the feeling of pleasure while falling on one's body, heated by prolonged summer, is suggested. Thus, the state of those absorbed in meditation is described in these words :-

> Firmly fixing the chest at first, one should meditate inwardly upon the deity

with one's eyes fixed on the nose-tip, lips tightened and (the body) absolutely motionless.

Here (in this illustration), the half-closing of eyes in the form of fixing of the eyes on the nose-tip, is suggested by the expression 'pakṣmasu sthitā' (i.e. 'resting on eye-lashes'). For, if the eyes were fully opened, the eye-lashes would have remained erected and if the eyes were fully closed, the eye-lashes would have remained downwards, and in either way the drops of (rain) water could not exist there. That her lips are tightened is suggested by the statement that the (rain-drops), fallen from her eye-lashes, rolled on the upper and lower lips, without entering into the mouth, and fell therefrom. Again, that she kept her chest fixed is suggested by the description of their falling (i.e. falling of rain-drops) on the height of her breasts therefrom; for, if she had a leaned posture as in an idle state, they (i.e. rain-drops) could not fall on the height (of her breast) as the pair of breasts would have an inward contracted shape. Even if somehow they fell therefrom and reached the threefold wrinkle, they would have a tortuous movement (in the wrinkles) and could not reach to the region of navel and could not enter into her deep navel. That she is motionless
2 is suggested by the statement of falling (of rain-drops) from her eye-lashes, lower-lip etc. step by step; for in the case of movement of her face etc. falling (of rain-drops), that had (already) fallen on her eye-lash, from her lower-lip, breast etc. step by step would not have been possible. Further, by these very epithets, the uncommon beauty of the goddess is suggested. Thus, that her eye-lash was thick is suggested by the epithet 'sthitā' ('resting'). (Similarly) smoothness of them by the expression 'kṣaṇam' ('for a

